मकार ' एवं द्विवर्ण[1] एकाक्षर ओमित्योंकारो निर्वृत्तः[2] ' ॥ २६ ॥

कतिमात्र इत्यादेस्तिस्रो[3] मात्रा ' अभ्यादाने हि प्लवते ' मकारश्चतुर्थी[4] ' किं स्थानमित्युभावोष्ठौ स्थानं ' नादानप्रदानकरणौ[5] च द्विस्थानं[6] ' संध्यक्षरमवर्णलेशः कण्ठ्यो[7] यथोक्तशेषः[8] ' पूर्वो विवृतकरणस्थितश्च[9] ' द्वितीयस्पृष्टकरणस्थितश्च ' न संयोगो विद्यत[10] ' आख्यातोपसर्गानुदात्तस्वरितलिङ्गविभक्तिवचनानि[11] च संस्थानाध्यायिन[12] आचार्याः पूर्वे बभूवुः ' श्रवणादेव प्रतिपद्यन्ते न कारणं पृच्छन्त्यथापरपक्षीयाणां[13] कविः पञ्चालचण्डः परिपृच्छको बभूवाबु[14] पृथगुद्गीथदोषान्भवन्तो ब्रुवन्त्विति ' तद्वाच्युपलक्षयेद्वर्णाक्षरपदाङ्कशो ' विभक्त्यामृषिनिषेवितामिति वाचं[15] स्तुवन्ति[16] ' तस्मात्कारणं ब्रूमो ' वर्णानामयमिदं भविष्यतीति ' षडङ्गविदस्तत्तथाधीमहे ' किं छन्द इति ' गायत्रं हि छन्दो ' गायत्री वै देवानामेकाक्षरा

---

1) द्विवर्णा B; 2) निर्वृत्तः A und B; 3) °देस्तिस्रा B; 4) °तुर्या C und E; 5) ? ? नदानेप्र° E; प्रदान fehlt in C; 6) द्व्यस्थानं A und E; यवस्थानं B; द्वियस्थानं C; 7) कण्ठ्यो B; कन्यो E; 8) शेषः A; 9) विवृत्त° B und C; 10) विद्युत A, B und C; विद्युता E; 11) °विचनानि A und C; 12) संहं नाध्या° A und C; संहिं ना° B; सस्थं नध्या° E; 13) Hinter पृच्छन्ति erwartet man इति; °पक्षियाणां A pr. man. und E; 14) ?; °वान्बु B; 15) वार्च B; 16) स्तुवन्ति B.

श्वेतवर्णा च व्याख्याता ' द्वौ द्वादशकौ वर्गावेतद्वै व्याकरणं[1] धात्वर्थवचनं शैक्ष्यं[2] छन्दोवचनं चाथोत्तरौ द्वौ द्वादशकौ[3] वर्गौ वेदरहसिकौ व्याख्याता ' मन्त्रः कल्पो ब्राह्मणमृग्यजुःसामाथर्वाणेषा[4] व्याहृतिश्चतुर्णां वेदानामानुपूर्वेणोभूर्भुवः[5] स्वरिति व्याहृतयः ॥ २७ ॥

असमीक्ष्यप्रवल्हितानि[6] श्रूयन्ते ' द्वापरादावृषीणामेकदेशो[7] दोषपतिरिह[8] चिन्तामापेदे त्रिभिः सोमः पातव्यः समाप्तमिव भवति ' तस्मादृग्यजुःसामान्यपक्रान्तेज्ञांस्यासंस्तत्र महर्षयः परिदेवयां चक्रिरे ' महच्छोकभयं प्राप्ताः स्मो ' न चैतत्सर्वैः समभिहितं '[9] ते वयं भगवन्तमेवोपधावाम[10] ' सर्वेषामेव शर्म भवानीति[11] ' ते तथेत्युक्त्वा तूष्णीमतिष्ठन्नानुपसन्नेभ्य[12] इत्युपोपसीदामीति[13] नीचैर्बभूवुः[14] ' स एभ्य उपनीय प्रोवाच ' मामिकामेव व्याहृतिमादित[15] आदितः कृणुध्वमित्येवं[16] मामका आधीयन्ते नर्ते भृग्वङ्गिरोविद्भ्यः[17] सोमः पातव्य ' ऋत्विजः पराभ-

---

1) व्याकर्णं B; 2) शैक्षं C und E; 3) द्वाशकौ A; द्वदशकौ C; 4) सामाथर्वे ण्येषां E; 5) वेदानामनुरपू° A, B und C; 6) असंमीक्ष्य° A, प्रवल्हि° alle hss.; 7) द्वापदादृणावृषी° C; 8) दोषपती° E; 9) समहितं C; 10) °धवाम B; 11) भवानति B; भवानिति A; 12) तूष्णामति° B; 13) ? man erwartet 1 P. Plur.; 14) °भूवु: E; 15) व्याहतिर्मादित B; व्याहूतिरादित E; 16) कृणुध्व° A, C und E; 17) °वद्य: C und E.

वन्ति ' यजमानो रजसापध्वस्यति ' श्रुतिश्चापध्वस्ता तिष्ठतीत्येवमेवोत्तरोत्तराद्योगात्तोकं तोकं प्रशाध्वमित्येवं प्रतापो[1] न पराभविष्यतीति ' तथा ह तथा ह भगवन्निति प्रतिपेदिर आप्याययंस्ते तथा वीतशोकभया बभूवुस्तस्माद्ब्रह्मवादिन ओंकारमादितः कुर्वन्ति ' ॥ २८ ॥

किं देवतमित्यृचामग्निर्देवतं ' तदेव ज्योतिर्गायत्रं छन्दः ' पृथिवी स्थानमग्निमीळे[2] पुरोहितं[3] यज्ञस्य देवमृत्विजं होतारं रत्नधातममित्येवमादिं कृत्वा ऋग्वेदमधीयते ' यजुषां वायुर्देवतं[4] ' तदेव ज्योतिस्त्रैष्टुभं छन्दो ' ऽन्तरिक्षं[5] स्थानमिषे त्वोर्जे त्वा वायव स्थ देवो वः सविता प्रार्पयतु श्रेष्ठतमाय कर्मण इत्येवमादिं[6] कृत्वा यजुर्वेदमधीयते ' साम्नामादित्यो देवतं ' तदेव ज्योतिर्जागतं[7] छन्दो ' द्यौः स्थानमग्न आयाहि वीतये गृणानो हव्यदातये नि होता सत्सि[8] बर्हिषीत्येवमादिं[9] कृत्वा सामवेदमधीयते ' ऽथर्वणां चन्द्रमा देवतं[10] ' तदेव ज्योतिः ' सर्वाणि छन्दांस्यापः स्थानं ' शं नो देवीरभिष्टय इत्येवमादिं कृत्वाथर्ववेदमधीयते ' ऽद्भ्यः स्थावरजङ्गमो भूतग्रामः[11] संभवति ' तस्मात्स-

1) मतापो C; 2) °ग्निमिळ्हे E; 3) पूरोहितं E; 4) °वतां E; 5) ऽन्तरीक्षं E; 6) °मादि E; 7) ज्योतिजोतिं B; 8) त्सि B; सत्सिता E; 9) °मादि E; 10) देवतां B und E; 11) °ग्रामं A.

र्वमापोमयं भूतं सर्वं भृग्वङ्गिरोमयमंतरैते[1] त्रयो वेदा भृगूनङ्गिरसः श्रिता इत्यविति[2] प्रकृतिरपामोंकारेण[3] चैतस्माद्व्यासः पुरोवाच । भृग्वङ्गिरोविदा[4] संस्कृतो[5] ऽन्यान्वेदानधीयीत । नान्यत्र संस्कृतो[6] भृग्वङ्गिरसो ऽधीयीत । सामवेदे ऽथ खिलश्रुतिर्ब्रह्मचर्येण[7] चैतस्मादथर्वाङ्गिरसो ह यो वेद स[8] वेद[8] सर्वमिति ब्राह्मणम् । ॥ २९ ॥

अध्यात्ममात्मभैषज्यमात्मकैवल्यमोंकारः[9] । आत्मानं निरुध्य सङ्गमात्रीं भूतार्थचिन्तां[10] चिन्तयेदतिक्रम्य[11] वेदेभ्यः सर्वपरमध्यात्मफलं प्राप्नोतीत्यर्थः । सवितर्कं ज्ञानमयमित्येतैः प्रश्नैः प्रतिवचनैश्च यथार्थं पदमनुविचिन्त्य प्रकरणज्ञो हि प्रबलो विषयी स्यात्सर्वस्मिन्वाकोवाक्य इति ब्राह्मणम् । ॥ ३० ॥

एतद्ध स्मैतद्विद्वांसमेकादशाक्षं[12] मौद्गल्यं ग्लावो[13] मैत्रेयो ऽभ्याजगाम । स तस्मिन्ब्रह्मचर्यं[14] वसतो[15] विज्ञायोवाच[16] किं स्विन्मर्या[17] अयं तन्मौद्गल्यो[18] ऽध्येति

---

1) °न्तरते E; 2) So Ed. B. Ind. इत्यति A und C; इत्यविति B; इत्यपिति E; 3) प्रकृतिरपामोंकारेण B; 4) °विदां B; 5) स्नुतो B; 6) संस्नुतो B; 7) खिलश्रुतिब्रह्म° A und B; 8) Fehlt in B; 9) °कारं C; 10) °चिन्तां A; 11) °क्राम्य A; °क्रम C; 12) ?, vielleicht °दशाक्षरं; 13) ग्लावो B; ग्लावा E; 14) ? vielleicht °चर्ये; 15) ? C वसन्तो; vielleicht वसद्; 16) विज्ञावाचो B; 17) स्विनार्या A; 18) °द्गल्यो C.

यदस्मिन्ब्रह्मचर्यं[1] वसतीति[2] ' तद्धि मौद्गल्यस्यान्तेवासी शुश्राव ' स आचार्यायाव्रज्याचचष्टे[3] ' दुरधीयानं[4] वा अयं भवन्तमवोचद्यो ऽयमद्यातिथिर्भवति[5] ' किं[6] सौम्य[7] विद्वानिति ' त्रीन्वेदान्ब्रूते भो इति ' तस्य सौम्य[7] यो विपष्टो[8] विजिगीषो ऽन्तेवासी तं मे ह्वयेति ' तमाजुह्राव[9] ' तमभ्युवाचासाविति[10] ' भो इति ' किं सौम्य[7] त आचार्यो ऽध्येतीति ' त्रीन्वेदान्ब्रूते भो इति ' यन्नु खलु सौम्यास्माभिः[11] सर्वे वेदा[12] मुखतो गृहीताः कथं त एवमाचार्यो भाषते ' कथं नु शिष्टाः शिष्टेभ्य एवं भाषेरन्यं ह्येनमहं[13] प्रश्नं[14] पृच्छामि न[15] तं विवक्ष्यति[16] न ह्येनमध्येतीति ' स ह मौद्गल्यः[17] स्वमन्तेवासिनमुवाच[18] परेहि सौम्य[19] ग्लावं मैत्रेयमुपसीदाधीहि भोः सावित्रीं गायत्रीं चतुर्विंशतियोनिं द्वादशमिथुनां ' यस्या भृग्वङ्गिरसश्चक्षुर्यस्यां सर्वमिदं श्रितं तां भवान्प्रब्रवीत्विति ' स चेत्सौम्य[20] दुरधीयानो भविष्यत्याचार्योवाच[21] ब्रह्मचारी ब्रह्मचारिणो[22]

1) So alle Hss., ed. B. Ind. hat °चर्ये; 2) वसती B; 3) Man erwartet °चचक्षे; 4) °यानां C; 5) °वतिर्व B; 6) कं B; 7) सोम्य A; 8) विपृष्ट C; 9) तस्मातुह्राव A und E; 10) °साविति B; °साविवि C; 11) सोम्या° A und E; 12) देवा C; 13) हेतमहं A; 14) Fehlt in B; 15) Fehlt in E; 16) व्यवक्षति E; विवक्षति C; 17) मौद्गल्या B; 18) °वासिन उवाच E; 19) सोम्य A und B; 20) चेत्सोम्य A; 21) °त्याचर्योवाच B; hinter भविष्यति scheint इति ausgefallen zu sein; 22) °चारिणो A, C und E.

सावित्रीं प्राहेति वक्ष्यति तत्त्वं ब्रूयाद्दुरधीयानं तं वै भवान्मौद्गल्यमवोचत्सं त्वा यं प्रश्नमप्राक्षीन्[1] तं व्यवोचः' पुरा संवत्सरादार्तिमारिष्यसीति[2]' ॥ ३१ ॥

स तत्राजगाम यत्रेतरो बभूव 'तं ह पप्रच्छ 'स ह न[3] प्रतिपेदे 'तं होवाच दुरधीयानं तं वै भवान्मौद्गल्यमवोचत्स त्वा यं प्रश्नमप्राक्षीन्[4] तं व्यवोचः 'पुरा संवत्सरादार्तिमारिष्यसीति[5] 'स ह मैत्रेयः[6] स्वानन्तेवासिन उवाच यथार्थं भवन्तो[7] यथागृहं यथामनो विप्रसृज्यन्तां 'दुरधीयानं वा अहं मौद्गल्यमवोचं 'स मा यं[8] प्रश्नमप्राक्षीन्[9] तं व्यवोचं 'तमुपैष्यामि[10] 'शान्तिं करिष्यामीति 'स ह मैत्रेयः[11] प्रातः समित्पाणिर्मौद्गल्यमुपससादासौ[12] वा[12] अहं भो मैत्रेयः[13] 'किमर्थमिति 'दुरधीयानं वा अहं[14] भवन्तमवोचं[15] 'त्वं[16] मा यं प्रश्नमप्राक्षीर्[17] तं व्यवोचं 'त्वामुपैष्यामि[18] 'शान्तिं करिष्यामीति'

---

1) °पराक्षीन E; 2) °मार्ष्यसीति A, C und E; 3) न: E; 4) °मपराक्षीन् E; 5) °तीति C; 6) मैत्रे B; मौद्गल्य: C und E; 7) भवतो B; 8) य B; 9) °मपराक्षीन् E; °मप्रक्षीन् C; °मप्राक्षीन्तं B; 10) So ed. B. Ind.; alle hss. तमुपेक्षामि; 11) मैत्रेयं B; 12) So corr.; °दासोवो A pr. m.; °दासा वा A sec. man. B, C und E; 13) Man erwartet hinter „मैत्रेय:" इति; 14) अ B; अयं E; 15) °मभवोचं B; °मावाचं E; 16) त्वां B; 17) So corr.; A, B und C °प्रक्षीन्; E °पराक्षीन्; 18) So B Ind.; A, C und E °पेक्षामि; B °पेश्यामि.

स होवाचात्र वा ऽयेतं च सर्वं च कृतं पापकेन त्वा यानेन[1] चरन्तमाहुरथो ऽयं[2] मम कल्याणस्तं ते ददामि[3] 'तेन याहीति स होवाचैतदेवात्राविषं[4] चानृशंस्यं च यथा भवानाहोपायामि[5] त्वेव[6] भवन्तमिति ' तं होपेयाय ' तं होपेत्य पप्रच्छ किं स्विदाहुर्भोः सवितुर्वरेण्यं भर्गो देवस्य कवयः किमाहुर्धियो विचक्ष्व यदि ताः प्रवेत्थ[7] ' प्रचोदयात्सविता[8] याभिरेतीति ' तस्मा एतत्प्रोवाच वेदांश्छन्दांसि[9] सवितुर्वरेण्यं ' भर्गो देवस्य कवयो ऽन्नमाहुः कर्माणि धियस्तदु ते[10] प्रब्रवीमि प्रचोदयात्सविता[11] याभिरेतीति ' तमुपसंगृह्य पप्रच्छाधीहि भोः कः सविता का सावित्री ' ॥ ३२ ॥

मन एव सविता वाक्सावित्री ' यत्र ह्येव मनस्तद्वाक्यत्र[12] वै वाक्तन्मन इत्येते द्वे योनी एकं मिथुनमग्निरेव सविता पृथिवी सावित्री ' यत्र ह्येवाग्निस्तत्पृथिवी यत्र वै पृथिवी तदग्निरित्येते द्वे योनी एकं मिथुनं ' वायुरेव सवितान्तरिक्षं सावित्री ' यत्र ह्येव वायुस्तदन्तरिक्षं यत्र

---

1) ? ? 2) य C; 3) दधामि E; 4) °त्रात्विषं A; °त्राविषं B; °वान्नात्विषं C; 5) °होयामि B; 6) So corr.; alle hss. त्वेव; 7) प्रवेकु B; प्रवेह C; 8) °यन्त्सविता A, B und E; 9) So corr.; die hss. वेदाञ्छ°; 10) वे E; 11) So B. Ind.; die hss. प्रचोदयन्त्स°; 12) °मनस्तद्वाक्यत्र B.

वा[1] अन्तरिक्षं[1] तद्वायुरित्येते द्वे योनी एकं मिथुनमादित्य एव सविता द्यौः सावित्री[2] ' यत्र ह्येवादित्यस्तद्द्यौर्यत्र[3] वै द्यौस्तदादित्य इत्येते द्वे योनी एकं मिथुनं ' चन्द्रमा एव सविता नक्षत्राणि सावित्री ' यत्र ह्येव चन्द्रमास्तन्नक्षत्राणि यत्र वै नक्षत्राणि तच्चन्द्रमा इत्येते द्वे योनी एकं[4] मिथुनमहरेव सविता रात्रिः सावित्री ' यत्र ह्येवाहस्तद्रात्रिर्यत्र[5] वै रात्रिस्तदहरित्येते द्वे योनी एकं मिथुनमुष्णमेव सविता शीतं सावित्री[6] ' यत्र ह्येवोष्णं तच्छीतं यत्र वै शीतं तदुष्णमित्येते[7] द्वे योनी एकं मिथुनमभ्रमेव[8] सविता वर्षं सावित्री ' यत्र ह्येवाभ्रं तद्वर्षं यत्र वै वर्षं तदभ्रमित्येते द्वे योनी एकं[9] मिथुनं ' विद्युदेव सविता स्तनयित्नुः सावित्री ' यत्र ह्येव विद्युत्तत्स्तनयित्नुर्यत्र[10] वै स्तनयित्नुस्तद्विद्युदित्येते द्वे योनी एकं मिथुनं ' प्राण[11] एव सवितान्नं सावित्री ' यत्र ह्येव प्राणस्तदन्नं यत्र वा[5] अन्नं[12] तत्प्राण इत्येते द्वे योनी एकं मिथुनं ' वेदा एव सविता छन्दांसि सावित्री यत्र ह्येव वेदास्तच्छन्दांसि यत्र वै छन्दांसि तद्वेदा इत्येते द्वे

1) वान्तरिक्षं A, C und E; 2) सावित्रा B; 3) ह्येवादित्यस्तत्र द्यौ A; 4) एक E; 5) ह्येवायह्° C; 6) सवित्री C; 7) °ष्णामिते B; 8) Von अभ्रमेव bis विद्युदेव fehlt in E; 9) एक C; 10) तत् fehlt in C; 11) प्राणा B; 12) वान्नं C; वा अन्नं E.

योनी एकं मिथुनं ' यज्ञ एव सविता दक्षिणाः सावित्री [1] ' यत्र ह्येव यज्ञस्तद्दक्षिणा यत्र वै दक्षिणास्तद्यज्ञ इत्येते द्वे योनी एकं मिथुनमेतद्ध स्मैतद्विद्वांसमोपाकारिमासस्तुर्ब्रह्मचारी [2] ते संस्थित इत्यथैत आसस्तुराचित [2] इव चितो [3] बभूवाथोत्थाय प्राब्राजीदित्येतद्वा [4] अहं वेद नैतासु योनिष्वित [5] एतेभ्यो वा मिथुनेभ्यः संभूतो ब्रह्मचारी मम पुरायुषः [6] प्रेयादिति ' ॥ ३३ ॥

ब्रह्म हेदं श्रियं प्रतिष्ठामायतनमैक्षत [7] ' तत्तपस्व ' यदि तद्व्रते ध्रियेत तत्सत्ये प्रत्यतिष्ठत्स [8] सविता सावित्र्या ब्राह्मणं सृष्ट्वा तत्सावित्रीं पर्यदधात्तत्सवितुर्वरेण्यमिति [9] सवित्र्याः प्रथमः पादः ' पृथिव्यर्चं [10] समदधादृचाग्निमग्निना [11] श्रियं ' श्रिया स्त्रियं ' स्त्रिया मिथुनं ' मिथुनेन प्रजां ' प्रजया कर्म [12] ' कर्मणा तपस्तपसा [13] सत्यं ' सत्येन ब्रह्म ' ब्रह्मणा [14] ब्राह्मणं ' ब्राह्मणेन व्रतं ' व्रतेन वै ब्राह्मणः संशितो [15] भवत्यशून्यो भवत्यविच्छिन्नो भवत्यविच्छिन्नो ऽस्य तन्तुरविच्छिन्नं [16] जीवनं [17] भवति य एवं

---

1) सवित्री A; 2) ? ? 3) चिन्तो B; 4) प्रब्राजीदि° A, C und E; प्राब्राजीदि° E; 5) योनिष्टित C und E; 6) पूरायुषः E; 7) प्रतिष्ठा° E; 8) स fehlt in B; 9) पर्यदध्यात्तत्सा° B; 10) पृथीव्यर्चं B; 11) °चाग्निमग्निना E; 12) Fehlt in E; 13) तपस् fehlt in B; 14) ब्राह्मणा C; 15) शंसितो C; 16) तन्तुमवि° B; 17) जीवन E; C hat hinter „जीवन" „भवनं" eingefügt.

वेद् यश्चैवं विद्वानेवमेतं सावित्र्याः[1] प्रथमं पादं व्याचष्टे ' ॥ ३४ ॥

भर्गो देवस्य धीमहीति[2] सावित्र्या द्वितीयः पादो ' ऽन्तरिक्षेण यजुः समदधाद्यजुषा वायुं ' वायुनाभ्रमभ्रेण वर्षं ' वर्षेणौषधिवनस्पतीनोषधिवनस्पतिभिः[3] पशून्पशुभिः कर्म[4] ' कर्मणा तपस्तपसा सत्यं ' सत्येन ब्रह्म ' ब्रह्मणा ब्राह्मणं ' ब्राह्मणेन व्रतं ' व्रतेन वै ब्राह्मणः संशितो भवत्यशून्यो भवत्यविच्छिन्नो भवत्यविच्छिन्नो ऽस्य तन्तुरविच्छिन्नं जीवनं भवति य एवं वेद् यश्चैवं विद्वानेवमेतं[5] सावित्र्या[6] द्वितीयं पादं व्याचष्टे ' ॥ ३५ ॥

धियो यो नः प्रचोदयादिति सावित्र्यास्तृतीयः पादो ' दिवा साम समदधात्साम्नादित्यमादित्येन[7] रश्मीन्रश्मिभिर्वर्षं ' वर्षेणौषधिवनस्पतीनोषधिवनस्पतिभिः पशून्पशुभिः कर्म ' कर्मणा तपस्तपसा सत्यं ' सत्येन ब्रह्म ' ब्रह्मणा ब्राह्मणं ' ब्राह्मणेन व्रतं ' व्रतेन वै ब्राह्मणः संशितो[8] भवत्यशून्यो भवत्यविच्छिन्नो भवत्यविच्छिन्नो ऽस्य तन्तुरविच्छिन्नं जीवनं भवति य एवं वेद् यश्चैवं विद्वानेवमेतं सावित्र्यास्तृतीयं पादं व्याचष्टे ' ॥ ३६ ॥

---

1) सवित्र्याः A und E; 2) धिमहिति E; धीमहिति B; 3) वर्षेणौसधि° A; 4) Fehlt in B und E; 5) विद्वानेवमत्र तं A; 6) सावित्र्यां B; 7) °दध्यात्सा° B; °दधात्साम्नामादित्य° A; 8) शंशितो C.

तेन ह वा एवंविदुषा ब्राह्मणेन ब्रह्माभिपन्नं ग्रसितं परामृष्टं ' ब्रह्मणाकाशमभिपन्नं ग्रसितं परामृष्टमाकाशेन वायुरभिपन्नो ग्रसितः[1] परामृष्टो ' वायुना ज्योतिरभिपन्नं ग्रसितं परामृष्टं ' ज्योतिषापो ऽभिपन्ना ग्रसिताः परामृष्टा ' अद्भिर्भूमिरभिपन्ना ग्रसिता परामृष्टा ' भूम्यान्नमभिपन्नं ग्रसितं परामृष्टमन्नेन प्राणो ऽभिपन्नो ग्रसितः परामृष्टः ' प्राणेन मनो ऽभिपन्नं ग्रसितं परामृष्टं ' मनसा वागभिपन्ना ग्रसिता परामृष्टा ' वाचा वेदा अभिपन्ना ग्रसिताः परामृष्टा ' वेदैर्यज्ञो ऽभिपन्नो ग्रसितः परिमृष्टस्तानि ह वा एतानि द्वादश महाभूतान्येवंविदि[2] प्रतिष्ठितानि ' तेषां यज्ञ[3] एव परार्ध्यः[4] '
॥ ३७ ॥

तं ह स्मैतमेवंविद्वांसो मन्यन्ते विद्मैनमिति याथातथ्यमविद्वांसो[5] ' ऽयं यज्ञो वेदेषु प्रतिष्ठितो ' वेदा वाचि[6] प्रतिष्ठिता ' वाङ्मनसि[7] प्रतिष्ठिता ' मनः प्राणे[8] प्रतिष्ठितं[8] ' प्राणो[8] ऽन्ने[8] प्रतिष्ठितो ' ऽन्नं भूमौ प्रतिष्ठितं ' भूमिरप्सु प्रतिष्ठितापो ज्योतिषि[9] प्रतिष्ठिता ' ज्योतिर्वायौ[10] प्रतिष्ठितं ' वायुराकाशे[11] प्रतिष्ठित[12] ' आकाशं

1) ग्रसितं A und B; 2) °वंविधि A pr. man. und C; 3) यज्ञं C; 4) परार्ध्य: C; 5) यथा° A und B; याता° E; 6) वाचि E; 7) वाङ्मनसि A; 8) Fehlt in E; 9) ज्योतीषि B; 10) °र्वायो B; 11) °काशो C; 12) प्रतिष्ठितम् A, B und E.

ब्रह्मणि प्रतिष्ठितं' ब्रह्म ब्राह्मणे ब्रह्मविदि[1] प्रतिष्ठितं' यो ह वा एवंवित्स[2] ब्रह्मवित्पुण्यां च कीर्तिं[3] लभते सुरभींश्च[4] गन्धान्सो ऽपहतपाप्मानन्तां[5] श्रियमश्नुते य एवं वेद यश्चैवंविद्वानेवमेतां[6] वेदानां मातरं सावित्रीं संपदमुपनिषदमुपास्त इति ब्राह्मणम्' ॥ ३८ ॥

आपो गर्भं जनयन्तीरित्यपां[7] गर्भः पुरुषः 'स यज्ञो[8]' ऽद्भिर्यज्ञः[9] प्रणीयमानः[10] प्राङ्गायते[11]' तस्मादाचमनीयं पूर्वमाहारयति' स यदाचामति त्रिराचामति' द्विः परिशुम्भत्यायुरवरुध्य[12] पाप्मानं निर्णुदत्युपसाद्य यजुषोद्धृत्य[13] मन्त्रान्प्रयुज्यावसाय प्राचीः शाखाः संधाय[14] निरङ्गुष्ठे पाणावमृतमस्यमृतोपस्तरणमस्यमृताय त्वोपस्तृणामीति पाणावुदकमानीय[15] जीवा स्थेति सूक्तेन त्रिराचामति' स यत्पूर्वमाचामति सप्त प्राणांस्तानेतेनास्मिन्नाप्याययति[16]' या ह्येमा बाह्याः शरीरान्मात्रास्तास्वथैतदग्निं[17] वायुमादित्यं चन्द्रमसमपः पशूनन्यांश्च प्रजास्तानेतेनास्मिन्नाप्याययत्या-

1) °विधि C; 2) एवंविद्वत्सा C; 3) कीर्त्तिं C und E; कीर्त्तिं B; 4) सुरभीश्च A und E; 5) So corr.; °नन्त्यां A; °नां श्च B; °नन्त C; °नन्त्यं E; 6) So B. Ind.; die hss. °तं; 7) जनयन्ति° A pr. man. und B; 8) यज्ञे B; 9) भिर्यज्ञः B; 10) प्रणयीमानः B; प्रसायमानः E; 11) प्राङ्ग्यते B; 12) परिशुंभन्त्या° B; 13) °षोद्धत्य B; °षोद्धृत्य C; 14) संधाया A, C und E; संभयो B; 15) सप्त प्राणावुदकमानीया B; 16) °प्यायति E; 17) °त्रास्तस्येथैतदग्नि B;

पो[1] ऽमृतं ' स यद्द्वितीयमाचामति समापानांस्तानेतेनास्मिन्नाप्याययति[2] ' या क्षेमा बाह्याः[3] शरीरान्मात्रास्तस्यैतत्पौर्णमासीमष्टकाममावास्यां श्रद्धां दीक्षां[4] यज्ञं दक्षिणास्तानेतेनास्मिन्नाप्याययत्यापो[5] ऽमृतं ' स यत्तृतीयमाचामति सप्त व्यानांस्तानेतेनास्मिन्नाप्याययति या क्षेमा बाह्याः शरीरान्मात्रास्तस्यैतत्पृथिवीमन्तरिक्षं दिवं[6] नक्षत्राण्यृतूनार्तवान्संवत्सरांस्तानेतेनास्मिन्नाप्याययत्यापो ऽमृतं ' पुरुषो ब्रह्मांयाप्रीग्निगमो[7] भवति तस्माद्धि विद्वान्पुरुषमिदं पुण्डरीकमिति ' प्राण एष स पुरि[8] शेते संपुरि[9] शेत[10] इति ' पुरिशयं[11] सन्तं प्राणं पुरुष इत्याचक्षते परोक्षेण ' परोक्षप्रिया इव हि देवा भवन्ति प्रत्यक्षद्विषः[12] ' स यत्पूर्वमाचामति पुरस्ताद्धोमांस्तेनास्मिन्नवरुन्द्धे[13] ' स[14] यद्द्वितीयमाचामत्याज्यभागौ तेनास्मिन्नवरुन्द्धे[13] ' स यत्तृतीयमाचामति संस्थितहोमांस्तेनास्मिन्नवरुन्द्धे[13] ' स यद्द्विः परिशुम्भति[15] तत्संमित्संवर्द्धिः[16] ' स यत्सर्वाणि खानि सर्वं देहमाप्याययति यच्चान्यदातारं[17] मन्त्रकार्यं यज्ञे स्क-

---

1) यज्ञांसा° B; 2) °प्याययत्याति B; 3) बह्वीः B; 4) दीक्ष्यां B; 5) °नेतेस्मानास्मिन्° A; 6) द्वि C; 7) ? ? so A und C; °प्रिं निगमो B; °प्रियं निगमो E; 8) पूरी E; 9) संपुरी B und E; 10) शन्त C; 11) पुरीशयं E; 12) प्रत्यक्षद्विष: A; 13) °वरुन्धे A; 14) Von स bis स यद्द्विः परि° fehlt in E; 15) °म्भयति B; 16) ? ?; 17) ?

न्दति सर्वं तेनास्मिन्नवरुन्द्धे' स यदोंपूर्वान्मन्त्रान्प्रयुङ्क्त आ सर्वमेधादिते ऋतव एत एवास्य सर्वेषु लोकेषु सर्वेषु देवेषु सर्वेषु वेदेषु सर्वेषु भूतेषु सर्वेषु सत्त्वेषु कामचारः कामविमोचनं भवत्यर्धे[1] च न प्रमीयते य एवं वेद' तदप्येतदृचोक्तमापो भृग्वङ्गिरो रूपमापो भृग्वङ्गिरोमयं सर्वमापोमयं भूतं सर्वं भृग्वङ्गिरोमयमन्तरैते त्रयो वेदा भृगूनङ्गिरसो ऽनुगाः ॥ अपां पुष्पं मूर्तिराकाशं पवित्रमुत्तममित्यांचम्याभ्युक्ष्यात्मानमनुमन्त्रयत इन्द्र जीवेति ब्राह्मणं' ॥ ३१ ॥

॥ इत्यथर्ववेदे गोपथब्राह्मणपूर्वभागे प्रथमः प्रपाठकः ॥

---

ओं ब्रह्मचारिण्यांश्चरति[2] रोदसी[3] उभे इत्याचार्यमाह[4] 'तस्मिन्देवाः संमनसो[5] भवन्तीति वायुमाह' स सद्य एति पूर्वस्मादुत्तरं समुद्रमित्यादित्यमाह' दीक्षितो दीर्घश्मश्रुरेष[6] दीक्षित एष दीर्घश्मश्रुरेष[7] एवाचार्यस्थाने तिष्ठन्नाचार्य इति स्तूयते' वैद्युतस्थाने तिष्ठन्वायुरिति

---

1) घर्धे ? ?; 2) ब्रह्माचा° A pr. m.; ब्रह्मचारिंश्च° B; 3) रोदसि A pr. man.; 4) °चार्यानाह E; 5) मनसो E; 6) °श्मुरोरेष C; °श्मसुरेष E; °श्रूरेष B; 7) °श्रूरेष B; °श्मुरेष E.

स्तूयते[1] द्यौस्थाने[2] तिष्ठन्नादित्य इति स्तूयते । तदप्येतदृचोक्तं ब्रह्मचारिणमिति[3] ब्राह्मणम् । ॥ १ ॥

जायमानो ह वै ब्राह्मणः सर्वेन्द्रियाण्यभिजायते[4] ब्रह्मवर्चसं च यशश्च स्वप्नं च क्रोधं च श्लाघां च रूपं च पुण्यमेव गन्धं सप्तमं । तानि ह वा अस्यैतानि ब्रह्मचर्यमुपेत्योपक्रामन्ति[5] । मृगानस्य ब्रह्मवर्चसं गच्छत्याचार्य[6] यशो ऽजगरं स्वप्नो । वराहं क्रोधो ऽपः[7] श्लाघा[8] । कुमारीं[9] रूपमोषधिवनस्पतीन्पुण्यो[10] गन्धः । स यन्मृगाजिनानि[11] वस्ते तेन तद्ब्रह्मवर्चसमवरुन्द्धे यदस्य मृगेषु भवति । स ह स्नातो ब्रह्मवर्चसी भवति । स यदहरहराचार्याय[12] कर्म करोति तेन तद्यशो ऽवरुन्द्धे यदस्याचार्ये भवति । स ह स्नातो यशस्वी[13] भवति । स यत्सुषुप्सुर्निद्रां निनयति तेन तं स्वप्नमवरुन्द्धे यो ऽस्याजगरे भवति । तं ह स्नातं स्वपन्तमाहुः[14] स्वपितु मैनं बोबुधयेति[15] । स यत्क्रुद्धो वाचा न कंचन हिनस्ति पुरुषात्पुरुषात्पा-

1) Fehlt in A; 2) Fehlt in E; 3) °चारिद्यमिति B; 4) So corr.; alle hss. °जायन्ते; 5) So corr.; alle hss. °मुपेतोप°; C °मुपेतोपक्रामति; 6) °चार्यं C und E; 7) So corr.; alle hss. ऽप; 8) श्लाघं B; 9) कुमारी E; 10) रूपमोषधीव° B; °न्पुण्ये E; 11) °गाजिनानि E; 12) यदहराचा° E; 13) यशस्व B; 14) स्वपतमाहु: E; 15) बोबुधेयेति B.

पीयानिव मन्यमानस्तेन तं क्रोधमवरुन्द्धे यो ऽस्य वराहे भवति ' तस्य ह[1] स्नातस्य[1] क्रोधाः[2] श्लाघीयसं विशन्ति ' ऽथाद्भिः श्लाघमानो न स्नायात्तेन तां[3] श्लाघामवरुन्द्धे यास्याप्सु भवति ' स ह स्नातः[4] श्लाघीयो ऽन्येभ्यः श्लाघ्यते ' ऽथैतद्ब्रह्मचारिणो रूपं यत्कुमार्यास्तां[5] नग्नां[6] नोदीक्षेतेति[7] वेति वा मुखं विपरिधापयेत्तेन[8] तद्रूपमवरुन्द्धे यदस्य कुमार्यां[9] भवति ' तं ह स्नातं कुमारीमिव निरीक्षन्ते[10] ' ऽथैतद्ब्रह्मचारिणः पुण्यो गन्धो य ओषधिवनस्पतीनां तासां पुण्यं गन्धं प्रच्छिद्य नोपजिघ्रेत्तेन तं पुण्यं गन्धमवरुन्द्धे यो ऽस्यौषधिवनस्पतिषु[11] भवति ' स ह स्नातः पुण्यगन्धिर्भवति ' ॥ २ ॥

स वा एष उपयंश्चतुर्धोपैत्यग्निं[12] पादेनाचार्यं पादेन[13] ग्रामं पादेन मृत्युं[14] पादेन ' स यदहरहः समिध[15] आहृत्य[15] सायंप्रातरग्निं[16] परिचरेत्तेन तं पादमवरुन्द्धे यो[17]

---

1) Fehlt in B; 2) क्रोधात् C; क्रोधान् E; Der Plural ist nicht deutlich; vielleicht क्रोधः श्लाघीयसं विशति zu lesen; 3) So corr.; die hss. तं; B त; 4) स्नातं E; 5) यत् fehlt in C; 6) नग्नान् B; 7) So corr.; A, B und C haben: नोदीक्षेदेति; E नोदीक्ष्येदेति; 8) त्ति fehlt in E; 9) कुमर्यां B; 10) °क्षते E; 11) °तीषु B; 12) उपयांश्च° A, B und C; 13) पादे पादेन B; 14) मृत्यु E; 15) समिधाहृत्य B; समिधा आहृत्य C; 16) प्रातरग्नि E; 17) Von यो bis यो ऽस्याचार्ये fehlt in C.

ऽस्याग्नौ भवति' स यदहरहराचार्याय कर्म करोति तेन तं पादमवरुन्द्धे यो ऽस्याचार्ये भवति' स यदहरहर्ग्रामं प्रविश्य[1] भिक्षामेव[2] परीप्सति न मैथुनं तेन तं पादमवरुन्द्धे यो ऽस्य[3] ग्रामे[4] भवति[5]' स यत्क्रुद्धो वाचा न कंचन हिनस्ति पुरुषात्पुरुषात्पापीयानिव[6] मन्यमानस्तेन तं पादमवरुन्द्धे यो ऽस्य मृत्यौ भवति' ॥ ३ ॥

पञ्च ह वा एते ब्रह्मचारिण्यग्नयो धीयन्ते' द्वौ पृथग्घस्तयोर्मुखे हृदय उपस्थ एव पञ्चमः' स यद्दक्षिणेन पाणिना स्त्रियं न स्पृशति तेनाहरहर्याजिनां लोकमवरुन्द्धे' यत्सव्येन तेन प्रव्राजिनां' यन्मुखेन तेनाग्निप्रस्कन्दिनां' यद्धृदयेन[7] तेन शूराणां' यदुपस्थेन तेन गृहमेधिनां' नैश्वेत्स्त्रियं पराहरत्यनग्निरिव[8] शिष्यते' स यदहरहराचार्याय कुले ऽनुतिष्ठते सो ऽनुष्ठाय ब्रूयाद्धर्मं गुप्तो[9] मा गोपायेति' धर्मो हैनं गुप्तो गोपायति[10]' तस्य ह प्रजा[11] श्वः श्वः श्रेयसी श्रेयसीह भवति' धाय्येव[12] प्रतिधीयते' स्वर्गे लोके पितॄन्निदधाति[13]' तावत्त्वं न वसीत'

---

1) पविश्यति C; 2) भिक्षामित्र A pr. man. und B; 3) स्यं B; 4) यामे B; 5) भवन्ति E; 6) पुरुषात् steht nur einmal in C; 7) यद्धृदयेन B und C; 8) पराहरति ? ?: man erwartet doch ein Verbum mit der Bedeutung „berühren"; 9) °धर्मगुप्तगुप्तो A, C und E; 10) Diese Stelle ist nicht richtig überliefert; 11) प्रज्ञां A pr. m. प्रज्ञा: B und E; 12) ?, धात्येव B, C und E; 13) °दध्यति B.

यस्तात्तवं वस्ते क्षत्रं वर्धते न ब्रह्म[1] । तस्मात्तात्तवं न वसीत[2] ब्रह्म वर्धतां मा[3] क्षत्रमिति । नोपर्यासीत । यदुपर्यास्ते प्राणमेव तदात्मनो ऽधरं कुरुते यद्यातो वहत्यंध[4] एवासीताधः शयीताधस्तिष्ठेदधो व्रजेदेवं ह स्म वै तत्पूर्वे ब्राह्मणा ब्रह्मचर्यं चरन्ति । तं ह स्म तत्पुत्रं भ्रातरं वोपतापिनमाहुरुपनयेतैनमित्यां समिद्धारान्त्स्वरेष्यन्तो ऽन्नमद्यादथाह जघनमाहुः स्नापयेतैनमित्या समिद्धारान्न ह्यैतानि व्रतानि भवन्ति । तं चेच्छयानमाचार्यो ऽभिवदेत्स प्रतिसंह्वाय[5] प्रतिशृणुयात्तं चेच्छयानमुत्थाय तं चेदुत्थितमभिप्रक्रम्य तं चेदभिप्रक्रान्तमभिपलायमानमेवं ह स्म वै तत्पूर्वे ब्राह्मणा[6] ब्रह्मचर्यं चरन्ति । तेषां ह स्म वैषा पुण्या कीर्तिर्गच्छन्त्या ह वा अयं सो ऽस्य[7] गमिष्यतीति ।

॥ ४ ॥

जनमेजयो ह वै पारीक्षितो मृगयां चरिष्यन्हंसाभ्यामसिष्यन्नुपावतस्थ[8] इति । तावूचतुर्जनमेजयं पारीक्षितमभ्याजगाम[9] । स होवाच । नमो वां भगवन्तौ को नु

---

1) ब्रह्मं B; 2) वसीद् E; 3) म B; 4) वहत्यध E; 5) प्रतिसंह्वाय A; प्रतिह्वाय E; 6) ब्राह्मणां E; 7) ऽस्य E; सो ऽस्य ist nicht deutlich; 8) °न्हंसाभ्यामसिक्तनु° A pr. man. und B; °न्हंसाभ्यामग्निष्यनु° E; 9) Man erwartet einen Dual.; इति fehlt; diese ganze Stelle ist sehr verdorben.

भगवन्ताविति ' तावूचतुर्दक्षिणाग्निश्चाहवनीयश्चेति ' स होवाच नमो वां भगवन्तौ तदाकीयतामितीहोपाराममित्यपि[1] किल देवा न रमन्ते न[2] हि[2] देवा[2] न[2] रमन्त[2] ' ऽपि चैकोपारामादेवा[3] आराममुपसंक्रामन्तीति[4] ' स होवाच नमो वां भगवन्तौ किं पुण्यमिति ' ब्रह्मचर्यमिति ' किं लौक्यमिति ' ब्रह्मचर्यमेवेति ' तत्को वेद इति ' दन्तावलो धौम्रो[5] ' ऽथ खलु दन्तावलो धौम्रो[6] यावति तावति काले पारीक्षितं जनमेजयमभ्याजगाम ' तस्मा उत्थाय[7] स्वयमेव विष्टरं निदधौ[8] ' तमुपसंगृह्य पप्रच्छाधीहि भो किं पुण्यमिति ' ब्रह्मचर्यमिति ' किं लौक्यमिति ' ब्रह्मचर्यमेवेति ' तस्मा एतत्प्रोवाचाष्टाचत्वारिंशद्वर्षं सर्ववेदब्रह्मचर्यं ' तच्चतुर्धा वेदेषु व्युह्य द्वादशवर्षं[9] ब्रह्मचर्यं द्वादशवर्षाण्यवरार्धमपि स्नायंश्चरेद्यथाशक्त्यपरं[10] ' तस्मा उहस्यृषभौ[11] सहस्रं ददावंथ्यपकीर्तितमाचार्यो ब्रह्मचारीत्येक आङ्गराकाशमधिदैवतमथाध्यात्मं ब्राह्मणो व्रतवांश्चरणवान्ब्रह्मचारी ' ॥ ५ ॥

1) आकीयताम् ? ; °तामितिहोपा° A pr. m.; 2) Fehlt in E; 3) चैकोपराद्धदेवा A; 4) °क्रामतीति E; 5) धैम्रौ C und E; hinter धौम्रो erwartet man इति; 6) धौम्रौ E; 7) उच्छ्राय B; 8) निदाध्यै B; 9) °वर्यं E; 10) °शक्त्ययपरं C; 11) Corrupt; vielleicht तस्मा उ ह स ऋषभौ.

ब्रह्म ह वै प्रजा मृत्यवे संप्रायच्छद्ब्रह्मचारिणमेव[1] न संप्रददौ ' स होवाचाश्यामस्मिन्निति[2] ' किमिति ' यां रात्रीं समिधमनाहृत्य[3] वसेत्तामायुषो[4] ऽवरुन्धीयेति ' तस्माद्ब्रह्मचार्यहरहः समिध आहृत्य[5] सायंप्रातरग्निं परिचरेन्नोपर्युपसादयेदथ प्रतिष्ठापयेद्यद्युपर्युपसादयेज्जीमूत-वर्षी तदहः पर्जन्यो भवति ' ते[6] देवा अब्रुवन्ब्राह्मणो वा अयं ब्रह्मचर्यं चरिष्यति ' ब्रूतास्मै[7] भिक्षा इति गृह-पतिर्ब्रूत बहुचारी गृहपत्न्या इति ' किमस्या[8] वृञ्जीता-ददत्या[9] इतीष्टापूर्तसुकृतद्रविणमवरुन्ध्यादिति[10] ' तस्मा-द्ब्रह्मचारिणे[11] ऽहरहर्भिक्षां[12] दद्याद्गृहिणी[13] मा मा-यमिष्टापूर्तसुकृतद्रविणमवरुन्ध्यादिति[14] ' सप्तमीं[15] नाति-नयेत्सप्तमीमतिनयन्न[16] ब्रह्मचारी भवति ' समिद्भैक्षे सप्तरा-त्रमचरितवान्ब्रह्मचारी पुनरुपनेयो भवति ' ॥ ६ ॥

नोपरिशायी स्यान्न गायनो न नर्तनो[17] न सरणो न निष्ठीविद्यद्युपरिशायी भवत्यभीक्ष्णं[18] निवासा जायन्त[19] '

1) So corr.; die hss. संप्रयच्छ°; °रिणामेव E; °रिणामेवं A; 2) So corr.; die hss. होवाचास्या°; 3) °मानाहृत्य C; 4) °युषा E; 5) ग्राहृत्य E; 6) Fehlt in E; 7) ब्रूतासौ C; 8) किं मस्या C; 9) °तादद्दात्य E; 10) इतीष्टापूर्त° B; 11) °चारिणो E; 12) °क्षीं E; 13) So ed. B. Ind. die hss. °गृहणी; 14) So corr.; die hss. मेयमि° ed. B. Ind. var. l. मोयमि°; 15) सप्तमी C; 16) °तिनयन A; °तिनयं नं B; °तिनयनं E; 17) नर्तनी E; 18) भवत्याभीक्षं B; 19) जायते E.

यद्गायन्तो भवत्यभीक्ष्णश[1] आक्रन्दान्धावन्ते ' यन्नर्तनो भवत्यभीक्ष्णशः[2] प्रेतान्निर्हरन्ते ' यत्सरणो भवत्यभीक्ष्णशः[3] प्रजाः संविशन्ते ' यन्निष्ठीवति मध्य[4] इव तदात्मनो[5] निष्ठीवति ' स चेन्निष्ठीवेद्दिवो नु मां यदत्रापि मधोरहं[6] यदत्रापि रसस्य म इत्यात्मानमनुमन्त्रयते ' यदत्रापि मधोरहं निरष्ठविषमस्मृतमग्निश्च[7] तत्सविता च पुनर्मे जठरे[8] धत्तां[9] ॥ यदत्रापि रसस्य मे परापपातास्मृतं तदिहोपह्वयामहे तन्म आप्यायतां पुनरिति ' न श्मशानमातिष्ठेत्स चेदभितिष्ठेदुदकं हस्ते कृत्वा यदीदमृतुकाम्येत्यभिमन्त्र्य[10] जपन्त्संप्रोक्ष्य परिक्रामेत्समयायोपरिव्रजेद्यदीदमृतुकाम्याघं[11] रिप्रमुपेयिम[12] । अन्धः[12] श्रोण इव क्षीयतां मा नोऽन्वागादघं यत इत्यथ हैतद्देवानां परिषूतं यद्ब्रह्मचारी ' तदप्येतदृचोक्तं देवानामेतत्परिषूतमनभ्यारूढं[13] चरति रोचमानं तस्मिन्सर्वे पशवस्तत्र[14] यज्ञास्तस्मिन्नन्नं सह देवताभिरिति ब्राह्मणम् ' ॥ ७ ॥

प्राणापानौ जनयन्निति शङ्खस्य मुखे[15] मन्त्रैर्वसि-

---

1) °भीक्ष्णश्र B und E; 2) भवति भीक्षश्र: B; °भीक्ष्णुश्न: E; 3) °भीक्षु: श्र: B; °भीक्ष्णश्र E; 4) मध्ये C und E; 5) तदात्मानो E; 6) मधोरहं E; 7) °ग्नीश्च B; 8) जरे E; 9) धात्तां E; 10) यदीदं मृ° A; यदीदमृतु° C; 11) °त्समयामोपरि° A sec. m.; समयाय ??; °मृतुकाम्याघं C; 12) °रिप्रमन्ध: A, B und E; 13) °भ्याद्रूढं B; 14) उपज्ञाव° B; 15) So corr.; alle hss. मूले.

ष्ठस्य[1] पुत्र एतां वाचं ससृजे शीतोष्णाविह्लोत्सौ प्रादुर्भवेयातामिति[2] ' तथा तच्छ्रश्वदनुवर्तते ' ऽथ[3] खलु विपाण्मध्ये वसिष्ठशिला[4] नाम प्रथम आश्रमो ' द्वितीयः कृष्णशिलास्तस्मिन्वसिष्ठः समतपद्विश्वामित्रजमदग्नी[5] जामदग्ने तपतो[6] ' गौतमभरद्वाजौ[7] सिंह्लौ[8] प्रभवे[9] तपतो ' गुंगुर्गुंगुवासे[10] तपत्यृषिर्ऋषिद्रोणे[11] ऽभ्यतपदगस्त्यो ऽगस्त्यतीर्थे तपति ' दिव्यत्रिर्ह्ले[12] तपति[13] ' स्वयंभूः कश्यपः कश्यपतुङ्गे[14] ऽभ्यतपडुलत्र्कर्लुतरह्नुः[15] श्वा वराह्वचिल्वठिबभ्रुकाः सर्पदंष्ट्रनः[16] संह्लनुकृण्वानाः[17] कश्यपतुङ्गदर्शनात्स्मरणपाठात्सिद्धिर्भवति ' ब्राह्म्यं वर्षसहस्रमृषिवने[18] ब्रह्मचार्येकपादेनातिष्ठति[19] ' द्वितीयं वर्षसहस्रं मूर्धन्येवामृतस्य[20] धारामाधारयद्ब्राह्माण्यष्टाचत्वारिंशद्वर्षसहस्राणि[21] सलिलस्य पृष्ठे शिवो ऽभ्यतपत्तस्मात्तस्मात्तपसो भूय एवाभ्यतपत्तदप्येता ऋचो ऽभिवदन्ति प्राणापानौ जनयन्निति ब्राह्मणम् ' ॥ ८ ॥

---

1) महर्षिर्व° A und B; महर्षेर्वषि° E; 2) °र्भविवेया° B; °भवेत्याद्यातामिति E; 3) य B; 4) वषि° C; 5) °त्रजामदग्नी B; 6) तापतो B; 7) गोतम° B, C und E; 8) सिंहो A, C und E; 9) So ed. B. Ind.; die hss. प्रभ्वे; 10) गुर्गुगुवासे B; गुर्गुगुर्वासे E; 11) °षिद्रोंपो A, C und E; 12) दिव्यत्रिरह A, B und E; 13) भवति C; 14) कशाप° C; 15) Sic.! 16) ? ?; 17) कृवाना: B; 18) वार्ष° A; 19) °तिष्ठ B, C und E; 20) °वमृतस्य C; 21) धीरामाधारया ब्राह्मा° E; धारामाराधयन्ब्रा° C; धारामधारयद्ब्रह्मण्य° A.

एकपाद्द्विपद[1] इति ' वायुरेकपात्तस्याकाशं पादश्चन्द्रमा द्विपात्तस्य[2] पूर्वपक्षापरपक्षौ पादावादित्यस्त्रिपात्तस्येमे लोकाः पादा ' अग्निः षट्पादस्तस्य पृथिव्यन्तरिक्षं[3] द्यौराप ओषधिवनस्पतय इमानि भूतानि पादास्तेषां सर्वेषां वेदा[4] गतिरात्मा प्रतिष्ठिताश्चतस्रो ब्रह्मणः शाखा ' अथो अङ्कः षडिति मूर्तिराकाशश्चेत्यृचा मूर्तिर्याजुषी गतिः ' साममयं[5] तेजो ' भृग्वङ्गिरसा मायैतद्ब्रह्मैव यज्ञश्चतुष्पाद्भिःसंस्थित इति ' तस्य भृग्वङ्गिरसः[6] संस्थे[7] ' अथो आङ्गिरेकसंस्थित इति ' यद्धोतर्चा मण्डलैः करोति पृथिवीं[8] तेनाप्याययत्यैतस्यां[9] ह्यग्निश्चरति ' तदप्येतदृचोक्तमग्निवासाः पृथिव्यसितज्ञूरिति '[10] यदध्वर्युर्यजुषा करोत्यन्तरिक्षं तेनाप्याययति ' तस्मिन्वायुर्न निविशते[11] कतमच्च[12] नाह्नरिति ' तदप्येतदृचोक्तमन्तरिक्षे पथिभिर्ह्रीयमाणो[13] न नि विशते[14] कतमच्च[15] नाह्नः । अपां योनिः प्रथमजा ऋतस्य क्व[16] स्विज्जातः[17] कुत आ बभूवेति ' यदुद्गाता साम्ना करोति दिवं तेनाप्याययति ' तत्र ह्यादित्यः शुक्रश्चरति ' तदप्येत-

---

1) एकापा° A;   2) ह्यिपा° B;   3) °रित्त C;   4) व्रेद C;
5) °मय E;   6) भृग्वङ्गिर A;   7) स्थे B;   8) पृथिवी B;   9) तेनास्याय° E;
10) °तनूरिति E; °सिनुतरिति C;   11) निविशान्ते B;   12) कतमच्चा B;
13) Sic.! B. Ind. var. l. °र्ह्रीयमाणो;   14) विश्रेते B;   15) कतमच्चा B;
16) खु B;   17) सिज्ञातः C.

ऋचोक्तमुच्चा[1] पतन्तमरुणं सुपर्णमिति[2] ' यद्ब्रह्मर्चां काण्डैः करोत्यपस्तेनाप्याययति ' चन्द्रमा ह्यप्सु चरति ' तदप्येतदृचोक्तं चन्द्रमा अप्स्वन्तरिति[3] ' तासामोषधिवनस्पतयः काण्डानि ' ततो मूलकाण्डपर्णपुष्पफलप्ररोहरसगन्धैर्यज्ञो[4] वर्तते ' ऽद्भिः कर्माणि प्रवर्तन्ते ' ऽद्भिः[5] सोमो ऽभिषूयते[6] ' तद्यद्ब्रह्माणं[7] कर्माणि कर्मण्यामन्त्रयत्यपस्तेनानुज्ञानात्येषो[8] ह्यस्य भागस्तद्यथा भोक्ष्यमाणो[9] ऽप एव प्रथममाचामयेदप उपरिष्टादेवं यज्ञो ऽद्भिरेव प्रवर्तते ' ऽप्सु संस्थाप्यते[10] ' तस्माद्ब्रह्मा[11] पुरस्ताद्धोमसंस्थितहोमैर्यज्ञो[11] वर्तते ' ऽन्तरा हि पुरस्ताद्धोमसंस्थितहोमैर्यज्ञं[12] परिगृह्णात्यन्तरा हि भृग्वङ्गिरसो वेदानाडुह्य[13] भृग्वङ्गिरसः सोमपानं मन्यन्ते ' सोमात्मको ह्ययं वेद ' तदप्येतदृचोक्तं सोमं मन्यते पपिवानिति ' तद्यथेमां[14] पृथिवीमुदीर्णां ज्योतिषा धूमायमानां[15] वर्षं शमयत्येवं ब्रह्मा भृग्वङ्गिरोभिर्व्याहृतिभिर्यज्ञस्य विरिष्टं[16] शमयत्यग्निरादित्याय[17]

---

1) °मुच्च A pr. m. 2) संपर्णमिति E; 3) So corr.; die hss. अप्सन्तरिति; 4) °हरसं गन्धैर्यज्ञो E; 5) Fehlt in C; 6) विषूयते B; विषुयते C; 7) °ह्मणं E; 8) °त्रयन्त्य° B und E; 9) भोक्षमाणो A, B und C; 10) °प्याते B; 11) ब्रह्मो oder यज्ञो ist Interpolation; 12) पुरस्ताढोमं सं° B; °र्यज्ञे A und E; 13) वेदानोदूह्य A, B und E; 14) धतद्यथेमां B; तदप्येमां E; 15) °यमनां C; 16) विष्टरं C; विष्टेरिस्यं E; 17) °ग्निरादित्या C und E.

शमयन्त्यैते[1] ऽङ्गिरस । एत इदं सर्वं समाप्नुवन्ति । वायुराप‍श्चन्द्रमा इत्यैते भृगव । एत इदं सर्वं समाप्याययन्त्यैकमेव[2] संस्थं भवतीति ब्राह्मणम् । ॥ १ ॥

विचारी ह वै काबन्धिः कबन्धस्याथर्वणस्य[3] पुत्रो मेधावी[4] मीमांसको[5] ऽनूचान आस[6] । स ह स्वेनातिमानेन मानुषं वित्तं नेयाय । तं मातोवाच । त एवैतदन्नमवोचंस्त[7] इम[8] एषु कुरुपञ्चालेष्वङ्गमगधेषु[9] काशिकौशलेषु[10] शाल्वमत्स्येषु[11] सवशोशीनरेषूदीच्येष्वन्नमदन्तीत्यथ[12] वयं तवैवातिमानेनानाद्याः[13] स्मो । वत्स वाहनमन्विच्छेति । स[14] मान्धातुर्यौवनाश्वस्य[14] सार्वभौमस्य राज्ञः सोमं प्रसूतमाजगाम । स सदो ऽनुप्रविश्यर्त्विजश्च यजमानं चामन्त्रयामास[15] । तस्याः प्राच्यो नद्यो वहन्ति[16] याश्च दक्षिणाच्यो[17] याश्च[18] प्रतीच्यो[19] याश्चोदीच्यस्ताः सर्वाः पृथङ्नामधेया[20] इत्याचक्षते[21] तासां समुद्रमभिपद्यमा-

1) Von शम° bis इदं fehlt in B; B fügt इत्येव ein; 2) समास्याप्या° E; 3) कबन्धः स्या° A; 4) मेध्यवी B; 5) मिमांसको E; 6) आ A; 7) °वोचस्त A und B; 8) इमम् B und E; 9) कुरुपाञ्चा° E; 10) काशकौ° A; काशको° C und E; 11) शाल्वमत्सेषु C; शात्वमत्सेषु E; 12) So corr.; शवस उशीत° A; शवस उशीन° B; सवस्व उशीन C; सुवस उशीन° E; 13) So corr.; °नेनाध्यास्मो A und E; नेनानाद्यास्मो B und C; 14) संतांध्यतुर्यौवनाश्च B; 15) °मस C; 16) वहति B; 17) °णाचो B; °णाश्यो C; 18) याचा B; 19) पतीच्यो B; प्रतीश्यो C; 20) °धेयोर् A und C; °ध्येयार् B; °धेरी E; 21) धीतिगचक्षते E.

नानां छिद्यते नामधेयं समुद्र इत्याचक्षते ' एवमिमे सर्वे वेदा निर्मिताः सकल्पाः सरहस्याः सब्राह्मणाः सोपनिषत्काः सेतिहासाः सान्वाख्यानाः[1] सपुराणाः सस्वराः ससंस्काराः[2] सनिरुक्ताः सानुशासनाः[3] सानुमार्जनाः[4] सवाकोवाक्यास्तेषां[5] यज्ञमभिपद्यमानानां[6] छिद्यते नामधेयं[7] यज्ञ इत्येवाचक्षते ' ॥ १० ॥

भूमेर्ह वा एतद्विच्छिन्नं[8] देवयजनं[9] यदप्राकप्रवणं[10] यदनुदक्प्रवणं यत्कृत्रिमं[11] यत्समविषममिदं[12] ह त्वेव देवयजनं यत्समं[13] समूलमविदग्धं[13] प्रतिष्ठितं[13] प्रागुदक्प्रवणं[13] समं समास्तीर्णमिव[14] भवति यत्र ब्राह्मणस्य ब्राह्मणतां विद्याद्ब्रह्मा ब्रह्मत्वं करोतीति ' वोचे[15] छन्दस्तन्न[15] विन्दामो[16] येनोत्तरमेमहीति ' तान्ह पप्रच्छ[17] किं विद्वान्होता हौत्रं[18] करोति किं विद्वानध्वर्युराध्वर्यवं करोति किं विद्वानुद्गातौद्गात्रं करोति किं विद्वान्ब्रह्मा[19] ब्रह्मत्वं करोतीति ' वोचे[20] छन्दस्तन्न[20] विन्दामो येनो-

1) सान्व्याख्यानाः A; सन्वाख्यानाः C; 2) संसंस्काराः B; संस्काराः C und E; 3) सानुसशासनरः E; 4) सानुमार्जताः E; 5) सवाकावाक्यस्तेषां E; 6) यज्ञमति° C; 7) माम° E; 8) °छिन्न E; 9) °यजन E; 10) यत्प्रा° A und B; 11) यत्कर्तृमं E; 12) यत्समं वि° B; 13) E hat यदप्राकप्रवणं यदनुदक्य; 14) °णामिव A; 15) ? ?; वोचेः छदस्तन्न B; वोचेः छन्दस्तं न C; वोधे छन्दस्तन्न E; 16) विदामो A; 17) प्रपद्य E; 18) होत्रं B und E; 19) ब्रह्म A; fehlt in B; 20) Vid. 15.

तरमेमहीति ' ते ब्रूमो वागेव होता हौत्रं करोति ' वाचो हि स्तोमाश्च वषट्काराश्चाभिसंपद्यन्ते ' ते ब्रूमो[1] वागेव होता वाग्ब्रह्म[2] वाग्देव[3] इति ' प्राणापानाभ्यामेवाध्वर्युराध्वर्यवं करोति ' प्राणप्रणीतानि[4] ह भूतानि प्राणप्रणीताः[5] प्रणीतास्ते[5] ब्रूमः प्राणापानावेवाध्वर्युः[6] प्राणापानौ[7] ब्रह्म प्राणापानौ देव इति ' चक्षुषैवोद्गातौद्गात्रं[8] करोति ' चक्षुषा हीमानि भूतानि पश्यन्त्यथो चक्षुरेवोद्गाता चक्षुर्ब्रह्म[9] चक्षुर्देव[10] इति[11] ' मनसैव ब्रह्मा[12] ब्रह्मत्वं करोति[13] ' मनसा हि तिर्यञ्च[14] दिश[15] ऊर्ध्वं च यच्च किं[16] च मनसैव करोति[17] तद्ब्रह्म[18] ' ते ब्रूमो[19] मन एव ब्रह्मा मनो ब्रह्म मनो देव इति ' ॥ ११ ॥

तद्यथा ह वा इदं यजमानश्च याजयितारश्च दिवं ब्रूयुः पृथिवीति पृथिवीं[20] वा[21] द्यौरिति ब्रूयुस्तदन्यो[22] नानुजानात्येतामेवं[23] नानुजानाति यदेतद्ब्रूयादथ नु कथ-

1) ब्रुमो B; 2) वागब्रह्म E; 3) वागदेव E; 4) प्राणाप्र° E; 5) Corrupt; प्रणीतस्ते A pr. m.; 6) प्राणापा° E; 7) प्राणापानौ E; 8) चक्षुषोत्रो° B; चक्षुषैवौ° C; 9) चक्षु ब्रह्म C; 10) चक्षु देव B und C; 11) होत B; 12) ब्राह्मा E; 13) करोतीति A; 14) तिर्यञ्च C; तिर्यक E; 15) दिन्ना E; 16) कि E; 17) करो E; 18) तद्ब्राह्म E; 19) ब्रुमो E; 20) पृथिव्री A pr. m; 21) So corr.; die hss. haben वाग्; 22) ब्रुयु° B und E; 23) न्यानुज्ञाताह्येत्येतामेव E.

मिति । होतेत्येव होतारं ब्रूयाद्वागिति वाचं ब्रह्मेति ब्रह्म देव इति देवमध्वर्युरित्येवाध्वर्युं[1] ब्रूयात्प्राणापानाविति[2] प्राणापानौ ब्रह्मेति ब्रह्म देव इति देवमुद्गातेत्येवोद्गातारं[3] ब्रूयाच्चक्षुरिति चक्षुर्ब्रह्मेति ब्रह्म देव इति देवं ब्रह्मेत्येव ब्रह्माणं ब्रूयान्मन इति मनो ब्रह्मेति ब्रह्म देव इति देवम् । ॥ १२ ॥

नानाप्रवचनानि ह वा एतानि भूतानि भवन्ति । ये चैवासोमपं याजयन्ति ये च सुरापं[4] ये[5] च ब्राह्मणं विच्छिन्नं[6] सोमयाजिनं तं प्रातः समित्पाणय उपोदेयुरुपायामो[7] भवन्तमिति । किमर्थमिति । यानेव[8] नो[9] भवांस्तान्न्वः[10] प्रश्नानपृच्छन्तानेव[11] नो भवान्व्याचक्षीतेति[12] । तथेति[13] । तेभ्य एतान्प्रश्नान्व्याचचष्टे[14] । तद्येन[15] ह वा इदं विद्यमानं चाविद्यमानं[16] चाभिनिदधाति[17] तद्ब्रह्म । तद्यो वेद स ब्राह्मणोऽधीयानोऽधीत्याचक्षत[18] इति ब्राह्मणम् । ॥ १३ ॥

---

1) इत्येवाध्वर्युम् fehlt in B; 2) ब्रुवा° B; 3) देवा उद्गातारं B; 4) सुरापां B; 5) चे ते C; 6) व्युछिन्नं B; व्याछिन्नं C und E; 7) उपोदेयुरुपायामो C; 8) यानेवम E; 9) B fügt व ein; 10) भवांस्ता स्त्वः B und C; भवंस्तान्त्वः E; 11) So corr.; die hss. °पृच्छयानेव; 12) So corr.; A, C und E °चति; B °यति; 13) तेथैति B; 14) एतान्प्रश्ना व्याच° B; व्याचचष्टे !! (sic.) vid. p. २३ z. 2; 15) तद्ये स C; 16) Zweimal in B; 17) °निदद्धाति B; 18) ऽधीत्य corrupt.

अथातो देवयजनान्यात्मा देवयजनं ' श्रद्धा देवयजनमृत्विजो देवयजनं ' भौमं[1] देवयजनं ' तद्वा एतदात्मा देवयजनं यदुपव्यायच्छमानो वानुपव्यायच्छमानो वा[2] शरीरमधिवसत्येष[3] यज्ञ ' एष[4] यजत[4] ' एतं[4] यजन्त[4] ' एतद्देवयजनमथैतच्छ्रद्धा[5] देवयजनं ' यदेव कदाचिदाद्ध्याच्छ्रद्धा त्वेवैनं नातीयात्तद्देवयजनमथैतदृत्विजो[6] देवयजनं ' यत्र[7] क्वचिद्ब्राह्मणो विद्यावान्मन्त्रेण[8] करोति तद्देवयजनमथैतद्भौमं देवयजनं ' यत्रापस्तिष्ठन्ति यत्र स्यन्दन्ति प्र तद्वहन्त्युद्वहन्ति[9] तद्देवयजनं ' यत्समं[10] समूलमविदग्धं[11] प्रतिष्ठितं प्रागुदक्प्रवणं समं समास्तीर्णमिव भवति यस्य[12] श्वभ्र ऊर्मौ[13] वृक्षः पर्वतो नदी पन्था वा पुरस्तात्स्यान्न देवयजनमात्रं पुरस्तात्पर्यवशिष्येन्नोत्तरतो[14] ऽग्नेः पर्युपसीदेरन्निति[15] ब्राह्मणम् ' ॥ १४ ॥

अदितिर्वै प्रजाकामौदनमपचत्तत उच्छिष्टमाश्नात्सा[16] गर्भमधत्त[17] ' तत आदित्या अजायन्त[18] ' य एष ओदनः

---

1) भौम C; 2) Fehlt in B; 3) °वसतो व B; 4) Fehlt in E; 5) °च्छ्रद्धो E; 6) नातीयात्तद्दे° E; 7) Von यत्र bis यत्रापस्ति° fehlt in B; 8) So B. Ind.; die hss. विद्यावान्म°; 9) तद्वहन्त्यु° A sec. man.; °द्वहन्ति B; 10) तयत्समं A; 11) °विदग्धं E; 12) यस्यन्दं B; 13) कुर्मौ B; उर्मौ C und E; 14) °नरतो B und E; 15) पर्यपसी° B; 16) So corr.; die hss. °मश्नात्सा; 17) °धत्तं E; 18) अजायन्त A pr. m.; अजायन्तं E.

पच्यत आरम्भणमेवैतत्क्रियत आक्रमणमेव ' प्रादेशमात्रीः समिधो भवन्त्येतावान्ह्यात्मा प्रजापतिना संमितो ' ऽग्नेर्वै या यज्ञिया तनूरश्वत्थे तया समगच्छतैषास्य[1] घृत्या[2] तनूर्यद्घृतं[3] ' यद्घृतेन[4] समिधो ऽनक्ति ताभ्यामेवैनं तत्तनूभ्यां समर्धयति[5] ' यन्निर्मार्गस्यादधात्यवगूर्त्या[6] वै वीर्यं क्रियते ' यन्निर्मार्गस्यादधात्यवगूर्त्या[6] एव ' संवत्सरो[7] वै प्रजननमग्निः[8] प्रजननमेतत्प्रजननं ' यत्संवत्सर ऋचाग्नौ समिधमादधाति प्रजननादेवैनं तत्प्रजनयिता[9] प्रजनयत्यंभक्तर्तु-[10] र्वै पुरुषो ' न हि तद्वेद यमृतुमभिजायते[11] ' यन्नक्षत्रं[12] तदाप्नोति ' य एष ओदनः पच्यते योनिरेवैषा क्रियते ' यत्समिध आधीयन्ते रेतस्तद्धीयते[13] ' संवत्सरे[14] वै रेतो हितं प्रजायते ' यः[15] संवत्सरे पर्येत्ते[16] ऽग्निमाधत्ते प्रजातमेवैनमाधत्ते[17] ' द्वादशसु रात्रीषु पुरा संवत्सरस्याधेयास्ता[18] हि संवत्सरस्य प्रतिमांयो[19] तिसृष्वथो[20] द्वयोरथो

---

1) So corr.; die hss. °षास्व; 2) So corr.; धृया A und C; धृत्या B; धत्या E; 3) °द्रघत E; 4) यदधृन B; यद्धृतेन C; 5) °यत्तिं E; 6) So corr.; die hss. °वकूत्या; 7) संव्रत्सरा E; 8) प्रज्ञानमग्निः E; 9) °नयिसेत B; 10) So corr.; °त्यवन्नर्तु B und C; °त्यवत्तुन A; °त्यावर्त्तंतु E; 11) So corr.; यदतु° A, B und E; यदूतु° C; 12) यं नस्तं त्तत्रं B; 13) So corr.; die hss. °स्तद्रीयते; 14) So corr.; die hss. संव्रत्मरो; 15) So corr.; die hss. ये; 16) पयेत्ति E; 17) So corr.; प्रजापतिरेवै° A pr. m. C und E; प्रजतिरेवै° A sec. m. und B; 18) So corr.; die hss. °धेयात्त्रा; 19) So corr.; die hss. प्रतिमा श्रयो; 20) तिवृष्य B; तिषृयो E.

पूर्वेद्युराधेयास्त[1] एवाग्निमादधानेनादित्या वा इत उत्तमा[2] अमुं[2] लोकमायंस्तें[2] पथिरक्षयस्त[3] इयक्षमाणां प्रतिनुदन्त[4] ' उच्छेषणभाजा वा आदित्या ' [यदुच्छिष्टं] ' यदुच्छिष्टेन समिधो ऽनक्ति तेभ्य एव प्रावोचत्तेभ्य[5] एव प्रोच्य स्वर्गं लोकं याति[6] ' ॥ १५ ॥

प्रजापतिरथर्वा देवः स तपस्तप्त्वैतं[7] चातुःप्राश्यं[8] ब्रह्मौदनं निरमिमीत[9] चतुर्लोकं[10] चतुर्देवं चतुर्वेदं चतुर्होत्रमिति ' चत्वारो वा इमे लोकाः पृथिव्यन्तरिक्षं द्यौराप इति ' चत्वारो वा इमे देवा अग्निर्वायुरादित्यश्चन्द्रमाश्चत्वारो वा इमे वेदा ऋग्वेदो[11] यजुर्वेदः सामवेदो ब्रह्मवेद इति ' चतस्रो वा इमा[12] होत्रा हौत्रमाध्वर्यवमौद्गात्रं ब्रह्मत्वमिति ' तदप्येतदृचोक्तं चत्वारि शृङ्गा त्रयो अस्य पादा द्वे शीर्षे सप्त[13] हस्तासो अस्य[14] । त्रिधा बद्धो वृषभो रोरवीति महो देवो मर्त्या[15] आविवेशेति ' चत्वारि शृङ्गेति वेदा वा एत उक्तास्त्रयो अस्य[16] पादा

1) So corr.; die hss. °धेयात्ते ; B पुंपूर्वेद्यु°; 2) So corr.; die hss. उत्तरमेव मे ऽमुष्मिं लोक ; 3) So corr.; die hss. °रक्षन्त इयन्त ; 4) प्रतिनुदन् E; 5) So corr.; A, B und C प्रोवाच°, प्रोवाचं° E; 6) So corr.; die hss. यन्ति ; 7) तपस्तप्तैतं E; 8) चतुः° E; 9) So corr.; die hss. निरमिमत ; 10) Fehlt in E; 11) ऋग्वेदा E; 12) इमे A, C und E; 13) सप्ता E; 14) Fehlt in B; 15) मर्त्या E; 16) स्य A.

इति सवनान्येव ' द्वे शीर्षे इति ब्रह्मौदनप्रवर्ग्याविव ' सप्त हस्तासो अस्येति छन्दांस्येव ' त्रिधा बद्ध इति मन्त्रः कल्पो ब्राह्मणं ' वृषभो रोरवीत्येष ह वै[1] वृषभ एष तद्रोरवीति यद्यज्ञेषु शस्त्राणि शंसत्यृग्भिर्यजुर्भिः[2] सामभिर्ब्रह्मभिरिति ' महो देवो मर्त्यां आविवेशेत्येष[3] ह वै महान्देवो यद्यज्ञ ' एष मर्त्यां आविवेश ' यो विद्यात्सप्त प्रवत इति प्राणानाह ' सप्त विद्यात्परावत इत्यपानानाह ' शिरो यज्ञस्य यो विद्यादित्येतद्धि यज्ञस्य शिरो यन्मन्त्रवान्ब्रह्मौदनो ' यो ह वा एतममन्त्रवन्तं[4] ब्रह्मौदनमुपेयादशिरसा[5] ह[5] वा[5] अस्य[5] यज्ञमुपेतो[5] भवति[5] ' तस्मान्मन्त्रवन्तमेव ब्रह्मौदनमुपेयान्नामन्त्रवन्तमिति ब्राह्मणम् ' ॥ १६ ॥

किमुयज्ञ[6] आत्रेयो[7] भवतीत्यादित्यं ह तमो जग्राह ' तदत्रिरपनुनोद ' तदत्रिरन्वपश्यत्तदप्येतदृचोक्तं सुतावमत्रिर्दिवमुन्निनाय[8] ' दिवि त्वात्रिरधारयत्सूर्या[9] मासाय कर्तवे इति ' तं[10] होवाच वरं वृणीष्वेति ' स होवाच

---

1) वा E;  2) शंसन्त्यृ° A, C und E;  3) °शेत्येव E;  4) एतमन्त्र A pr. man.;  5) So die hss.; vielleicht zu lesen: °दशिरसा ह वा अस्य यज्ञ उपेतो भवति;  6) So corr.; die hss. किमुपयज्ञ;  7) अत्रेयो A; आत्रयो B;  8) सुताव° A, C und E;  9) त्वात्रिरधाय° E;  10) त E.

दक्षिणीया मे प्रजा[1] स्यादिति ' तस्मादात्रेयाय प्रथमं दक्षिणा[2] यज्ञे दीयन्त[3] इति ब्राह्मणम् ' ॥ १७ ॥

प्रजापतिर्वेदानुवाचाग्नीनादधीयेति ' तान्वागभ्युवाचाश्वो[4] वै संभाराणामिति ' तं[5] घोरात्क्रूरात्सलिलात्सरस[6] उदानिन्युस्तान्वागभ्युवाचाश्वः[7] शम्येतेति[8] ' तथेति ' तमृग्वेद एत्योवाचाहमश्वं शमेयमिति ' तस्मा अभिसृताय[9] महद्भयं[10] ससृजे ' स एतां प्राचीं दिशं भेजे ' स होवाचाशान्तो न्वयमश्व इति ' तं यजुर्वेद एत्योवाचाहमश्वं शमेयमिति ' तस्मा अभिसृताय[11] महद्भयं ससृजे ' स एतां प्रतीचीं दिशं भेजे ' स होवाचाशान्तो न्वयमश्व[12] इति ' तं सामवेद एत्योवाचाहमश्वं शमेयमिति ' केन नु त्वं शमयिष्यसीति ' रथंतरं नाम मे सामाघोरं चाक्रूरं च ' तेनाश्व[13] अभिष्टूयेतेति[13] ' तस्मा अप्यभिसृताय[14] तदेव महद्भयं ससृजे ' स एतामुदीचीं दिशं भेजे ' स होवाचाशान्तो न्वयमश्व[15] इति ' तान्वागभ्युवाच शंयुमाथर्वणं[16] गच्छतेति[17] '

---

1) प्राजा E; 2) So corr.; प्रथमद° A, C und E; प्रथद° B; 3) दियन्त A; 4) °वाचाश्वौ B; 5) त A pr. man.; तो E; 6) °घोराक्रू° B und C; 7) °भ्युवाचा E; 8) समेतिते B; शमेते C; 9) So corr.; die hss. अभि°; 10) महाद्भयं C; महद्भूयं E; 11) Vid. 9; 12) न्वायमश्व E; 13) So corr.; A तेनाश्वमभिष्टूयति; तेनामभिष्टूयते B; तेनाश्वमभिष्टूयेति C; तेनाश्वमभिष्यते E; 14) So corr.; die hss. अप्यविस्°; अयविस्° C; 15) °मश्वम् E; 16) शंयूमाथर्वणो E; 17) So corr.; die hss. °यति.

ते शंयुमाथर्वणमासीनं प्राप्योचुर्नमस्ते अस्तु भगवन्नश्वः[1] शम्येतेति[2] ' तथेति[3] ' स खलु कबन्धस्याथर्वणस्य पुत्रमामन्त्रयामास विचारिन्निति[4] 'भगो इति हास्मै[5] प्रतिश्रुतं प्रतिशुश्रावांश्वः[6] शम्येतेति[7] ' तथेति[8] ' स खलु शान्त्युदकं चकाराथर्वणीभिश्चाङ्गिरसीभिश्च[9] चातनैर्मातृनामभिर्वास्तोष्पत्यैरिति[10] शमयति[11] ' तस्य[12] ह[13] स्नातस्याश्वस्याभ्युक्षितस्य सर्वेभ्यो रोमसमरेभ्यो ऽङ्गारा[14] आशीर्यन्त ' सो ऽश्वस्तुष्टो नमस्कारं चकार ' नमः शंयुमाथर्वणाय[15] यो मा यज्ञियमचीक्लृपदिति[16] ' भविष्यन्ति ह वा अतो ऽन्ये ब्राह्मणा लघुसंभारतमास्तं[17] आदित्यस्य पद[18] आधास्यन्त्यनडुहो[19] वत्सस्याजस्य श्रवणस्य[20] ब्रह्मचारिणो वैतद्वा[21] आदित्यस्य पदं यद्भूमिस्तंस्यैव[22] पद आह्रितं भविष्यतीति[23] ' सो ऽग्नौ प्रणीयमाणे ऽश्वे ऽन्वारब्धं[24]

---

1) °श्वं A und E; 2) नांमेतेति B; शंमेतेति C; 3) तयैतेति E; 4) विचारं निति A und E; 5) ह स्मै A pr. man.; 6) °वाश्वं A; 7) शांम्येतेति B; शंमेतेति C; 8) तयैति E; 9) च fehlt in A; 10) चतनै° C; 11) corrupt; vielleicht शमयतेति; 12) तस्यै E; 13) Fehlt in E; 14) गारा B und E; 15) शंयुम आथर्वणाय C; man erwartet शम्यव आथर्वणाय; 16) यज्ञियमन्विक्लृ° B; यज्ञमवोहूपदिति E; 17) लघुसंचार° C; 18) पदम् A, B und C; 19) अधास्यत्य° E; 20) ? Man erwartet den Namen eines Tieres; 21) So B. Ind.; die hss. वा एतद्वा; 22) So B. Ind.; A und B °स्तयैव, C und E °स्तयैव; 23) °ष्यसीति E; 24) So B. Ind.; °रब्धे A und E; °रब्ध C; °रब्धं B.

ब्रह्मा यजमानं वाचयति यदक्रन्दः प्रथमं जायमान[1] इति पश्च ' तं[2] ब्राह्मणा[3] उपवदन्ति तं ब्रह्मोपाकुरुत ' एष ह वै विद्वान्सर्वविद्ब्रह्मा यद्भृग्वङ्गिरोविदिति ब्राह्मणम् ' ॥ १८ ॥

देवाश्च ह वा असुराश्चास्पर्धन्त[4] ' ते[5] देवा इन्द्रमब्रुवन्निमं नस्तावद्यज्ञं[6] गोपाय यावदसुरैः संयतामहा इति ' स वै नस्तेन[7] रूपेण गोपाय येन नो रूपेण भूयिष्ठं ह्लादयसि येन शक्ष्यसि[8] गोप्तुमिति ' स ऋग्वेदो भूत्वा पुरस्तात्परीत्योपातिष्ठत्तं देवा अब्रुवन्नन्यत्तद्रूपं कुरुष्व[9] नैतेन[2] नो[2] रूपेण[2] भूयिष्ठं[2] ह्लादयसि[2] नैतेन शक्ष्यसि[10] गोप्तुमिति ' स यजुर्वेदो भूत्वा पश्चात्परीत्योपातिष्ठत्तं[11] देवा अब्रुवन्नन्यत्तद्रूपं कुरुष्व नैतेन नो रूपेण भूयिष्ठं ह्लादयसि नैतेन शक्ष्यसि[12] गोप्तुमिति ' स सामवेदो भूत्वोत्तरतः परीत्योपातिष्ठत्तं देवा अब्रुवन्नन्यदेव[13] तद्रूपं कुरुष्व[14] नैतेन[14] नो रूपेण भूयिष्ठं ह्लादयसि[15] नैतेन[15] शक्ष्यसि[12] गोप्तुमिति ' स इन्द्र उष्णीषी[16] ब्रह्म-

1) जायमाना C; 2) Fehlt in E; 3) So ed. B. Ind.; ब्रह्मणा A, C und E; ब्रह्मणा B; 4) °र्धते E; 5) त E; 6) नस्साव° B; 7) मह्लेन B; 8) So B. Ind.; A, B und C शिक्षसि, E शिक्षिसि; 9) कुरुस्वो E; 10) So ed. B. Ind.; A, B; E शिक्षसि, C शक्षसि; 11) पश्चात्परीत्यापा° B; 12) Vid. 8; 13) अब्रुवन् देव A; अब्रुनेतं B; अब्रुवन्नन्यतदेव E; 14) कुरुष्वैतेन E; 15) ह्लादयस्यैतेन B; 16) उष्णी E.

वेदो भूत्वा दक्षिणतः परीत्योपातिष्ठत्तं देवा अब्रुवन्ने-
तत्तद्रूपं[1] कुरुष्वैतेन नो रूपेण भूयिष्ठं ह्यादयस्यैतेन[2]
शक्ष्यसि[3] गोप्तुमिति । तद्यदिन्द्र[4] उष्णीषी ब्रह्मवेदो भूत्वा
दक्षिणतः परीत्योपातिष्ठत्तद्ब्रह्माभवत्तद्ब्रह्मणो ब्रह्मत्वं ।
तद्वा एतदथर्वणो रूपं यदुष्णीषी ब्रह्मा । तं दक्षिणतो
विश्वे देवा उपासीदंस्तं[5] यद्दक्षिणतो विश्वे देवा उपा-
सीदंस्तत्सदस्यो[6] ऽभवत्तत्सदस्यस्य[7] सदस्यत्वं । बलेर्ह वा
एतद्बलमुपजायते[8] यत्सदस्य । आमयतो[9] वै[9] व्रजस्य[9]
बहुलतरं[9] व्रजं[9] विदन्ति[9] । घोरा वा एषा दिग्दक्षिणा
शान्ता इतरास्तद्यानि स्तुतानि ब्रह्मानुमन्त्रयते मनसैव
तानि सदस्यो जनदित्येतां व्याहृतिं[10] जपत्यात्मानं[11]
जनयति[12] नजित्यात्मानमपित्वे[13] दधाति । तं देवा अब्रु-
वन्वरं वृणीष्वेति । वृणा इति । स वरमवृणीतास्यामेव[14]
मां होत्रायामिन्द्रभूतं पुनन्त स्तुवन्तः[15] शंसन्तस्तिस्थेयु-

1) अब्रुन्ने° B; 2) ह्यादयदस्यैतेन°; ह्यादाय° C; 3) Vid. p. ५३ Note 8. 4) स इन्द्र B; 5) उपासीरंस्तं A; उपासीरस्तं E; 6) उपासीरंस्त° A; उपासीरस्त° E; °दस्ये B; 7) °दस्य A, C und E; 8) °मुपाजायते E; 9) ? ? corrupt; व्रजं fehlt in E; statt विदन्ति hat C विन्दन्ति; E विदन्वन्ति; 10) व्याहूति C; 11) So corr. जपं चेत्या° A und C; जपं वेत्या° B und E; Caland zu Vait. 18, 17 schlägt vor hier zu lesen व्याहूतिमनुजपति; 12) जयति A; 13) Sic; vielleicht zu lesen: जनयित्वात्मान°; 14) वरम fehlt in E; 15) स्तुवत: B.

रिति' तं तस्यामेव होत्रायामिन्द्रभूतं पुनन्त स्तुवन्तः[1] शंसन्तो ऽतिष्ठंस्तं यत्तस्यामेव होत्रायामिन्द्रभूतं पुनन्त स्तुवन्तः शंसन्तो ऽतिष्ठंस्तद्ब्राह्मणाच्छंस्यभवत्तद्ब्राह्मणाच्छंसिनो ब्राह्मणाच्छंसित्वं[2] ' सैषैन्द्री[3] होत्रा यद्ब्राह्मणाच्छंसीया ' द्वितीयं वरं[4] वृणीष्वेति ' वृणा इति ' स वरमवृणीतास्यामेव मां होत्रायां वायुभूतं पुनन्त[5] स्तुवन्तः शंसन्तस्तिस्थेयुरिति[6] ' तं तस्यामेव होत्रायां वायुभूतं पुनन्त स्तुवन्तः शंसन्तो[7] ऽतिष्ठंस्तं यत्तस्यामेव[8] होत्रायां[9] वायुभूतं[10] पुनन्त[11] स्तुवन्तः शंसन्तो[12] ऽतिष्ठंस्तत्पोताभवत्तत्पोतुः पोतृत्वं[13] ' सैषा[14] वायव्या होत्रा[15] यत्पोत्रीया ' तृतीयं वरं[16] वृणीष्वेति ' वृणा इति ' स वरमवृणीतास्यामेव मां होत्रायामग्निभूतमिन्धानाः[17] पुनन्त स्तुवन्तः शंसन्तस्तिष्ठेयुरिति ' तं तस्यामेव होत्रायामग्निभूतमिन्धानाः[17] पुनन्त स्तुवन्तः शंसन्तो[18] ऽतिस्थंस्तं यत्तस्यामेव होत्रायामग्निभूतमिन्धानाः पुनन्त स्तुवन्तः शंसन्तो ऽतिस्थंस्तदाग्नीध्रो[19] ऽभवत्तदाग्नीध्रस्याग्नीध्रत्वं[20] '

1) स्तुवतः B; 2) सित्व E; 3) सैबौद्री E; 4) Fehlt in C; 5) पुनत E; 6) ग्रंसतस्ति° B; 7) ग्रंसतो B; ग्रंसंता E; 8) यतस्यमित्र E; 9) होत्राय E; 10) वायुंभूतं A; 11) पुनत E; 12) ग्रंसन्तस् A, B und E; 13) पौतृत्वं E; 14) सेषा B; 15) होत्राय E; 16) Fehlt in B und C; 17) °मिधानाः E; 18) ग्रंसतो B und E; 19) °ग्नीधो B; 20) °धस्याग्नीध्र E.

सैषाग्नेयी होत्रा यदाग्नीध्रीयेति[1] ब्राह्मणम्' ॥ १९ ॥

ब्राह्मणो ह वा इममग्निं वैश्वानरं बभार[2] 'सो[3] ऽयमग्निर्वैश्वानरो[4] ब्राह्मणेन ध्रियमाण[5] इमांल्लोकाञ्जनयते' ऽथायमीक्षते ऽग्निर्जातवेदा[6] ब्राह्मणद्वितीयो ह वा अयमिदमग्निर्वैश्वानरो ज्वलति[7] 'हन्ताहं[8] यन्मयि तेन[9] इन्द्रियं वीर्यं[10] तद्दर्शयाम्युत[11] वै मा[12] बिभृयादिति[13]' स आत्मानमाप्याय्येतं[14] पयो ऽधोक्तमिमं[15] ब्राह्मणं दर्शयित्वात्मन्यजुहोत्स द्वितीयमात्मानमाप्याय्येतं[16] घृतमधोक्तमिमं[15] ब्राह्मणं[17] दर्शयित्वात्मन्यजुहोत्स तृतीयमात्मानमाप्याय्येतदिदं[16] विश्वं[18] विकृतमन्नाद्यमधोक्तमिमं[19] ब्राह्मणं दर्शयित्वात्मन्यजुहोत्स[20] चतुर्थमात्मानमाप्याय्येतेन[16] ब्राह्मणस्य जायां विराजमपश्यत्तामस्मै[21] प्रायच्छत्सात्मा[22] अपित्वमभवत्तत[23] इममग्निं[24] वैश्वानरं[25]

1) यदाग्नीयेति A; यदसीध्रीयोति E; 2) बभरर् C; 3) स्रो E; 4) ऽयमग्निर्वै° E; 5) ध्रीयमाणा C; ध्रियमाणां E; 6) ऽग्निनां न वेदा E; 7) ज्वलति E; 8) हताहं B; 9) तेत्रं E; 10) वीर्य E; 11) तद्दर्शयाम्युत्र E; तद्दर्शायां स्युत B; 12) मां E; 13) बिभ्रयादिति B; 14) So corr.; °माप्याययेत्रं A und E; °माप्याययेत B; °माप्याययेतं C; 15) ? vielleicht verdorben! 16) Vid. 14; 17) ब्रह्मणं E; 18) विश्व B; 19) विकृतमन्त्रनाद्यम° B; अधोक्तम् corrupt; 20) °त्मान्यजुहोत्स B; जुहोत्स fehlt in E; 21) विराजमश्य° A; 22) und 23) verdorben; 22) °त्स आत्मा A und B; 23) °मभवकृत C; 24) इममग्नि E; 25) विश्वानरं B.

परास्युर्ब्राह्मणो[1] ऽग्निं जातवेदसमधत्त । सो ऽयमब्रवीदग्ने जातवेदो ऽभिनिधेहि[2] मेहीति । तस्य हैतं नामाधत्ताघोरं[3] चाक्रूरं च । सो ऽश्वो[4] भवत्तस्मादश्वो[5] वहेन रथं[6] न भवति[7] पृष्ठेन सादिनं[8] । स देवानागच्छत्स देवेभ्यो ऽन्वातिष्ठत्तस्माद्देवा अबिभयुस्तं ब्रह्मणे प्रायच्छन्तमेतयर्चाशमयत्[9] ॥ २० ॥

अग्निं[10] त्वाकुर्वैश्वानरं सदनान्प्रदहन्नगाः[11] । स नो देवत्राधिब्रूहि[12] मा रिषामा वयं तवेति । तमेताभिः पञ्चभिर्ऋग्भिरुपाकुरुते[13] यदक्रन्दः प्रथमं जायमान[14] इति । सो ऽशाम्यत्तस्मादश्वः[15] पशूनां जिघत्सुतमो[16] भवति । वैश्वानरो[17] ह्येष । तस्मादग्निपदमश्वं[18] ब्रह्मणे[19] ददाति[20] । ब्रह्मणो[21] हि प्रत्तं[22] । तस्य रसमपीडयत्स रसो ऽभवद्रसो ह वा एष । तं वा एतं रसं सन्तं[23] रथ[24] इत्याचक्षते परोक्षेण[25] । परोक्षप्रिया इव हि देवा भवन्ति[26] प्रत्य-

---

1) परास्युर् corrupt!; 2) विनिधेहि B; ऽभिनिधिहि E; 3) °अघोरं A und E; 4) स्वो A; 5) °दस्वो A; 6) रथे A, C und E; 7) भवन्ति B; zu erwarten ist वहति; 8) सादिन B; 9) °तयच त्तिमवित् E; 10) अग्नि B; 11) सयदनान्प्र° B; सहदनान्प्र° C; सद्नानप्रदह° E; 12) दवत्राधि° E; 13) पञ्चभि ऋग्भि° B; पञ्चभिर्ऋग्भि° C; 14) Von जायमान bis अश्वं fehlt in E; 15) °दश्वं B; 16) So corr.; die hss. जिघत्सुरतमो; 17) वैश्वानरो B; 18) °ग्निः पदमश्वं B; 19) ब्राह्मणो B; 20) ददाति E; 21) ब्रह्मं C; 22) प्रत्तं A pr. m.; प्रत्तन् B; प्रत्तंन् C; प्रणा E; 23) सतं A; 24) रस E; 25) परोक्षणो E; 26) भवती E.

न्नद्विषः ' स देवानागच्छत्स देवेभ्यो ऽन्वातिष्ठत्तंस्माद्देवा[1] अबिभयुस्तं ब्रह्मणे प्रायच्छत्तमेतयर्चाऽन्याकृत्याभ्यजुहोदिन्द्रस्यौजो[2] मरुतामनीकमिति रथमभिकृत्य[3] तमेतयर्चातिष्ठद्वनस्पते वीड्वङ्गो हि भूया इति ' तस्मादाग्न्याधेयिकं[4] रथं ब्रह्मणे ददाति ' ब्रह्मणे हि प्रत्तं[5] ' तस्य तत्त्राणास्तनूं[6] ज्येष्ठां[7] दक्षिणां निरमिमत[8] ' तां पश्चस्वपश्यदृचि यजुषि साम्नि शान्ते[9] ऽथ घोरे ' तासां[10] द्वे ब्रह्मणे[11] प्रायच्छद्वाचं च ज्योतिश्च ' वाग्वै धेनुर्ज्योतिर्हिरण्यं[12] ' तस्मादाग्न्याधेयिकां[13] चातुःप्राश्यां धेनुं[14] ब्रह्मणे ददाति ' ब्रह्मणे हि प्रत्ता[15] ' पशुषु शाम्यमानेषु चक्षुर्ह्लापयन्ति ' चक्षुरेव तदात्मनि धत्ते[16] ' यद्वै[17] चक्षुस्तद्धिरण्यं ' तस्मादाग्न्याधेयिकं हिरण्यं ब्रह्मणे ददाति ' ब्रह्मणे हि प्रत्तं ' तस्यात्मन्नधत्त[18] ' तेन प्राज्वलयद्यंन्नाधत्त तदाग्लाभवत्तंदाग्ला[19] भूत्वा सा समुद्रं प्राविशत्सा[20] समुद्र-

1) °त्तस्माद्देवा E; 2) °र्चान्नाहुत्याभ्यः जुहो° E; 3) So corr.; die hss. °हुत्या; B रथ प्रक्रिह्वा; 4) °यीकं A sec. m.; B und C; °ह्विकं E; 5) Vid. p. ५७ Note 22; 6) तत्त्रापासूनू B; °पास्तनू C und E; 7) ज्येष्ट C; 8) निरमिमतं E; 9) शात्ये A; 10) तासो E; 11) ब्राह्मणे A pr. m. und E; 12) °र्हिरण्यां E; 13) °धेह्विकां C; 14) धेनु C und E; 15) So B. Ind.; A, B und C प्रत्ताय, E प्रता; 16) धत्तं E; 17) Von यद्वै bis तेन प्राज्वल fehlt in E; 18) So corr.; A und E तस्यात्मनि धत्त B und C तस्यात्मनं धत्त; 19) तदालाभव° B; 20) प्रावीशत्सा E.

मदहत्तस्मात्समुद्रो दुर्गिरवपि[1] 'वैश्वानरेण हि[2] दग्धः' सा पृथिवीमुदैत्सा[3] पृथिवीं व्यदहत्सा[4] देवानागच्छत्सा देवानहेडत्तं[5] देवा ब्रह्माणमुपाधावंस्त नैवागायन्नानृत्यत्सैषाग्लैषा[6] कारुविदा नम 'तं वा एतमाग्लाहृतं सन्तमाग्लागृध इत्याचक्षते परोक्षेण' परोक्षप्रिया[7] इव हि देवा भवन्ति प्रत्यक्षद्विषो' य एष ब्राह्मणो गायनो नर्तनो वा भवति तमाग्लागृध इत्याचक्षते' तस्माद्ब्राह्मणो नैव[8] गायेन्न नृत्येन्माग्लागृधः स्यात्तस्माद्ब्राह्म्यं[9] पूर्वं हविरपरं प्राजापत्यं 'प्राजापत्याद्ब्राह्म्यमेवोत्तरमिति[10] ब्राह्मणम्' ॥ २१ ॥

अथर्वाणश्च ह वा अङ्गिरसश्च[11] भृगुचक्षुषी तद्ब्रह्माभिव्यपश्यंस्तंदज्ञानन्वयं[12] वा इदं सर्वं यद्भृग्वङ्गिरस इति' ते देवा ब्राह्म्यं[13] हविर्यत्सांतपने ऽग्नावजुहवुरेतद्धि ब्राह्म्यं हविर्यत्सांतपने ऽग्नौ हूयत' एष ह वै सांतपनो[14] ऽग्निर्यद्ब्राह्मणस्तंस्योर्जयोर्जा[15] देवा अभजन्त सुमनस एव

1) Sic.! दुर्गिरवविर् C; दूर्गिरतपि E; 2) Fehlt in E; 3) So B. Ind.; °मुदैयीत्सा A und C; °मुहैत्सा B; °मुदैसा E; 4) व्यहहत्सा B; व्यहदत्सा E; 5) देवानहिडत्ते A, B und E; 6) °बाग्लौवा B und C; 7) परोक्षिप्रिया E; 8) नैवं B; 9) °द्रूब्राह्मं A pr. m.; 10) So corr.; die hss. haben °वोत्रममिति; 11) आङ्गिर° A pr. m. B und E; 12) तद्रूब्राह्मा° A pr. m.; 13) ब्राह्मं A pr. m.; 14) संतपनो E; 15) °स्योर्जयोर्जा A; °स्योर्जयोज्ञां E.

स्वधां[1] पितरः श्रद्धया स्वर्गं लोकं ब्राह्मणास्तेन सुन्वन्त्यृषयो[2] ऽन्नत स्त्रियः केवल आत्मन्यवारुन्धत[3] वाच्या[4] उभयेन सुन्वन्ति[5] ' यद्धि यज्ञे ब्राह्म्यं[6] हविर्न निरुप्येतानृतवः प्राजापत्यहविषो[7] मनुष्या[8] जायेरन्नसौ याह्लोकाञ्जूणिवति[9] पिता[10] ह्येष आहवनीयस्य[11] गार्हपत्यस्य[11] दक्षिणाग्नेर्यो ऽग्निहोत्रं जुहोतीति ' देवाः प्रिये धामनि मदन्ति[12] ' तेषामेषो ऽग्निः सांतपनः श्रेष्ठो[13] भवत्येतस्य वाचि तृप्तायामग्निस्तृप्यति ' प्राणे तृप्ते वायुस्तृप्यति ' चक्षुषि[14] तृप्त[15] आदित्यस्तृप्यति ' मनसि तृप्ते चन्द्रमास्तृप्यति ' श्रोत्रे तृप्ते दिशश्चान्तर्देशाश्च तृप्यन्ति ' स्नेहेषु[16] तृप्तेष्वापस्तृप्यन्ति ' लोमेषु[9] तृप्तेष्वोषधिवनस्पतयस्तृप्यन्ति[17] ' शरीरे[18] तृप्ते पृथिवी तृप्यत्येवमेषो[19] ऽग्निः सांतपनः श्रेष्ठस्तृप्तः सर्वांस्तृप्तांस्तर्पयतीति[20] ब्राह्मणम् ' ॥ २२ ॥

सांतपना इदं हविरित्येष ह[21] वै[22] सांतपनो ऽग्नि-

1) स्वधा E; 2) सुन्वन्त्° C; 3) आत्मन्येवा° A und C; आत्मन्यवरुधत E; 4) वाचा B; 5) सुन्वन्तिं E; 6) ब्राह्मणं C; 7) प्रजाप° B; °हाविषो C; 8) मानुष्या C; 9) Sic.! 10) पित C; 11) So ed. B. Ind.; die hss. °यत्र; 12) मदन्ते C; मदते E; 13) श्रेष्ठ्यो E; 14) चक्षुषी A und E; 15) तृप्या E; 16) स्नेहेषु E; 17) °प्यति B; 18) शरी B; 19) तृप्यन्त्येव° A; तृप्यत्येवम् fehlt in E; 20) सर्वान्तृ° A, C und E; 21) हा E; 22) Fehlt in E.

र्यद्ब्राह्मणो[1]' यस्य गर्भाधानपुंसवनसीमन्तोन्नयनजातकर्म-
नामकरणनिष्क्रमणान्नप्राशनगोदानचूडाकरणोपनयना-
प्लवनाग्निहोत्रव्रतचर्यादीनि कृतानि भवन्ति स सांतपनो'
ऽथ यो ऽयमनग्निकः स कुम्भे लोष्टस्तद्यथा कुम्भे[2] लोष्टः
प्रक्षिप्तो[3] नैव शौचार्थाय कल्पते, नैव शस्यं[4] निर्व-
र्तयत्येवमेवायं[5] ब्राह्मणो ऽनग्निकस्तस्य ब्राह्मणस्यान-
ग्निकस्य नैव दैवं दद्यान्न[6] पित्र्यं न चास्य[7] स्वाध्याया-
शिषो[8] न[9] यज्ञाशिषः[9] स्वर्गगमा[10] भवन्ति तदप्येत-
दृचोक्तमग्निं[11] दूतं वृणीमहे होतारं विश्ववेदसम् । अस्य
यज्ञस्य सुक्रतुमिति ब्राह्मणम्' ॥ २३ ॥

अथ ह प्रजापतिः सोमेन यक्ष्यमाणो[12] वेदानुवाच
कं वो होतारं वृणीय[13] कमध्वर्युं[14] कमुद्गातारं कं
ब्रह्माणमिति[15]' त[16] ऊचुर्ऋग्विदमेव[17] होतारं वृणीष्व
यजुर्विदमध्वर्युं[18] सामविदमुद्गातारमथर्वाङ्गिरोविदं[19] ब्र-
ह्माणं[20]' तथा ह्यस्य यज्ञश्चतुर्षु[21] लोकेषु चतुर्षु देवेषु

---

1) ऽग्निर्य ब्रह्मणो B; °ह्मणो E; 2) कुम्भ A; 3) प्रतिप्तो B; 4) शास्यं E; 5) निर्वर्तयन्त्ये° C; निवर्तयन्त्ये° E; 6) दद्यात् E; 7) चास्या E; 8) स्वध्या° B; 9) भवन्त्याशिष E; 10) °गया E; 11) °मग्नि B; 12) यक्षमाणो E; 13) So corr.; die hss. वृणीयां; 14) °ध्वर्यु E; 15) ब्राह्मणामिति B; 16) तद् A und C; 17) ऊचुरृग्वे° A, B und E; 18) यजुर्वे° A, B und E; 19) सामवे° C; 20) ब्रह्मणां B; 21) यज्ञः ist einmal zu viel.

चतुर्षु वेदेषु चतसृषु होत्रासु[1] चतुष्पाद्यज्ञः प्रतितिष्ठति[2]' प्रतितिष्ठति[3] प्रजया पशुभिर्य एवं वेद' तस्मादृग्विदमेव[4] होतारं वृणीष्व स[5] हि[5] हौत्रं[6] वेदाग्निर्वै[7] होता' पृथिवी वा ऋचामायतनमग्निर्देवता गायत्रं छन्दो भूरिति[8] शुक्रं[9]' तस्मात्तमेव होतारं वृणीष्वेत्येतस्य लोकस्य जितय' एतस्य लोकस्य विजितय' एतस्य लोकस्य संजितय' एतस्य लोकस्यावरुद्धय' एतस्य लोकस्य विवृद्धय[10]' एतस्य लोकस्य समृद्धय एतस्य लोकस्योदात्तय[11]' एतस्य[12] लोकस्य व्याप्तय[13]' एतस्य लोकस्य पर्याप्तय' एतस्य[12] लोकस्य समाप्तये' ऽथ चेन्नैवंविदं[14] होतारं वृणुते[15] पुरस्तादेवैषां यज्ञो रिच्यते' यजुर्विदमेवाध्वर्युं वृणीष्व[16] स ह्याध्वर्यवं वेद' वायुर्वा अध्वर्युरन्तरिक्षं[17] वै यजुषामायतनं' वायुर्देवता[18] त्रैष्टुभं छन्दो भुव इति शुक्रं[19]' तस्मात्तमेवाध्वर्युं[20] वृणीष्वेत्येतस्य लोकस्येत्येवाथ[21] चेन्नैवंविदमध्वर्युं[20] वृणुते[22] पश्चादेवैषां यज्ञो रिच्यते'

1) होत्रा B; 2) So corr.; die hss. प्रतिष्ठति; 3) प्रतीष्ठति B; प्रतिष्ठति E; 4) °निव A und C; 5) तन्नि E; 6) होत्रं E; 7) वेदग्निं वे E; 8) भूमिति B; 9) शुकं B und C; 10) व्यृध्य A sec. m. und C; विमृद्ध्यं E; 11) ?; vielleicht °स्योदाप्त्य; 12) एतस्या B; 13) व्याप्ताय B; 14) चेन्नैव विदं E; 15) वृणुत्ति E; 16) वृणीष्व C; 17) °रिक्ष E; 18) °वतां E; 19) शुक्र E; 20) °ध्वर्यु E; 21) लोकस्यनाथ B; 22) वृणुत्यते B.

सामविदमेवोद्गातारं[1] वृणीष्व ' स ह्यौद्गात्रं[2] वेदादित्यो वा उद्गाता ' द्यौर्वै साम्नामायतनमादित्यो देवता जागतं छन्दः स्वरिति शुक्रं[3] ' तस्मात्तमेवोद्गातारं वृणीष्वेत्येतस्य लोकस्येत्येवाथ चेन्नैवंविदमुद्गातारं वृणुत उत्तरत एवैषां यज्ञो रिच्यते ' ऽथर्वाङ्गिरोविदमेव ब्रह्माणं[4] वृणीष्व[5] ' स हि ब्रह्मत्वं वेद ' चन्द्रमा वै ब्रह्मापो[6] वै भृग्वङ्गिरसामायतनं ' चन्द्रमा[7] देवता वैद्युतश्चोष्णिक्ककुभे[8] छन्दसी[9] ओमित्यथर्वणां शुक्रं जनदित्यङ्गिरसां ' तस्मात्तमेव ब्रह्माणं वृणीष्वेत्येतस्य लोकस्य जितय ' एतस्य लोकस्य विजितय[10] ' एतस्य लोकस्य संजितय ' एतस्य लोकस्यावरुद्धय ' एतस्य लोकस्य[11] विवृद्धय[12] ' एतस्य लोकस्य समृद्धय ' एतस्य लोकस्योदात्तय[13] ' एतस्य लोकस्य व्याप्तय ' एतस्य लोकस्य पर्याप्तय ' एतस्य लोकस्य समाप्तये ' ऽथ चेन्नैवंविदं[14] ब्रह्माणं[15] वृणुते दक्षिणत[16] एवैषां यज्ञो रिच्यते दक्षिणत[17] एवैषां[17] यज्ञो[17] रिच्यते ॥ २४ ॥

॥ इत्यथर्ववेदे गोपथब्राह्मणपूर्वभागे द्वितीयः प्रपाठकः ॥

---

1) सामवे° C; 2) ह्यौद्गात्रां E; 3) शुक्रं B; 4) ब्राह्मणा E; 5) वृणीष्वं E; 6) ब्रह्मा आपो E; 7) चन्द्रं च मा B; 8) °तश्चोस्मिकाकुंभे E; 9) छन्दसि A; 10) विजित C; 11) लोकस्या C; 12) व्यृढय A sec. m., B und C; 13) ?; °दाप्तय ?; 14) चेनैवं° C; चेन्नैवंविद E; 15) ब्रह्मणा E; 16) दक्षित C; 17) Fehlt in C und E.

ओं दक्षिणाप्रवणा भूमिर्दक्षिणत[1] आपो वहन्ति' तस्माद्यज्ञास्तद्भूमेरुन्नततरमिव[2] भवति यत्र भृग्वङ्गिरसो विष्ठास्तंद्यथाप[3] इमांल्लोकानभिवहन्त्येवमेव[4] भृग्वङ्गिरसः सर्वान्देवानभिवहन्त्येवमेवैषा[5] व्याहृतिः सर्वान्वेदानभिवहन्त्योमिति[6] ऋचामोमिति यजुषामोमिति साम्नामोमिति सर्वस्याह्वाभिवादस्तं ह स्मैतदुत्तरं यज्ञे विद्वांसः कुर्वन्ति' देवा ब्रह्माण आगच्छतागच्छतेत्यैते[7] वै देवा ब्रह्माणो यद्भृग्वङ्गिरसस्तानेवैतद्वृणानास्तान्वृणाना[8] ह्वयन्तो मन्यन्ते' नान्यो ऽभृग्वङ्गिरोविदो[9] वृतो यज्ञमागच्छेन्यंशस्य[10] तेजसा तेज आप्नोत्यूर्जयोर्जा[11] यशसा यशो' नान्यो ऽभृग्वङ्गिरोविदो[12] वृतो यज्ञमागच्छेन्नेद्यज्ञं[13] परिमुष्णीयादिति[14]' तद्यथा पूर्वं वत्सो ऽधीत्य[15] गां[16] धयेदेवं ब्रह्मा भृग्वङ्गिरोविद्वृतो[17] यज्ञमागच्छेन्नेद्यज्ञं[13] परिमुष्णीयादिति' तद्यथा गौर्वाश्वो वाश्वतरो वैकपाद्द्विपात्त्रिपा-

---

1) °क्षिणात A pr. m. und E; 2) तस्मायज्ञस्त° C ?; 3) विष्ठा: sic.!!; 4) °हत्येवमेव E; 5) °हत्येव° E; °मवैष्टा B; 6) °भिवहंसामिति E; 7) आगच्छता आगच्छतेत्यैते A sec. m. und C; आगच्छतागच्छतेत्येत B; आगच्छतागच्छत गच्छतेत्यैतेवै E; 8) So corr.; A und B °द्वृणानांस्तान्वृणानां; C °द्रुणानांस्तान्वृणानां; E °द्वणानास्तान्वृणानां; 9) °रोविद् A und E; 10) यज्ञमागच्छेन्य° A, B und E; l. °गच्छेय° ? 11) °र्यूर्जयास्तां B; 12) °रोविद् A und E; 13) °न्नेयज्ञं E; 14) परी° B; 15) Sic.!! ऽधीत्यं E; 16) गा E; 17) °विद्वृतो B und C.

दिति स्यात्किमभिवहेत्किमभ्यश्नुयादिति[1] ' तस्मादृग्विदमेव[2] होतारं वृणीष्व[3] यजुर्विदमध्वर्युं[4] सामविदमुद्गातारमथर्वाङ्गिरोविदं ब्रह्माणं ' तथा ह्यस्य यज्ञश्चतुर्षु लोकेषु चतुर्षु देवेषु चतुर्षु वेदेषु चतसृषु होत्रासु चतुष्पाद्यज्ञः प्रतितिष्ठति[5] ' प्रतितिष्ठति प्रजया पशुभिर्य एवं वेद[6] यश्चैवमृत्विजामार्त्विज्यं वेद यश्च यज्ञे यजनीयं[7] वेदेति ब्राह्मणम् ' ॥ १ ॥

प्रजापतिर्यज्ञमतनुत[8] ' स[9] ऋचैव[9] हौत्रमकरोद्यजुषाध्वर्यवं[10] साम्नौद्गात्रमथर्वाङ्गिरोभिर्ब्रह्मत्वं[11] ' तं वा एतं[12] महावाद्यं[13] कुरुते यदृचैव हौत्रमकरोद्यजुषाध्वर्यवं साम्नौद्गात्रमथर्वाङ्गिरोभिर्ब्रह्मत्वं[14] ' स वा एष त्रिभिर्वेदैर्यज्ञस्यान्यतरः पक्षः संस्क्रियते[15] ' मनसैव ब्रह्मा यज्ञस्यान्यतरं[16] पक्षं[17] संस्करोत्ययमु वै यः पवते स यज्ञस्तस्य[18] मनश्च वाक्च वर्तनी[19] ' मनसा चैव हि वाचा च[20]

---

1) °श्नुयादिति C; °ःयणीयादिति E; 2) °ग्विद्मिव A und C; °ग्वेद्मेव E; 3) वृणीष्वं E; 4) यजुर्वे° E; 5) So corr.; die hss. प्रतिष्ठति; 6) वेदं E; 7) यजनेयं E; 8) °नुतं E; 9) सपृत्तचै E; 10) होत्र° C und E; 11) °ब्रह्मा C; °ब्रह्म E; 12) Von एतं bis एष fehlt in E; 13) महाव्राद्यं; B महावाद्य ! sic.! cf. Ait. Br. V 33. 1; 14) साम्नौद्गत्र° A; 15) संष्क्रियते E; 16) यज्ञस्यां न्यतरं A; 17) पक्ष E; 18) यज्ञस्तस्या B; 19) So corr.; die hss. वर्तनिः; 20) Fehlt in E.

यज्ञो[1] वर्तते[1] ' ऽद[1] इव मन इयमेव वाक्स यद्वद्-
न्नास्ति[2] विद्यादर्धं[3] मे ऽस्य यज्ञस्यान्तरगादिति[4] ' तद्यथै-
कपात्पुरुषो यन्नेकचक्रो[5] वा रथो[6] वर्तमानो भ्रेषं[7]
न्येत्येवमेवास्य यज्ञो भ्रेषं[8] न्येति ' यज्ञस्य[9] भ्रेषमनु यज-
मानो भ्रेषं न्येति[10] ' यजमानस्य भ्रेषमन्वृत्विजो[11] भ्रेषं[12]
नियन्त्यृत्विजां[13] भ्रेषमनु दक्षिणा भ्रेषं[8] नियन्ति ' दक्षि-
णानां भ्रेषमनु यजमानः पुत्रपशुभिर्भ्रेषं न्येति ' पुत्रपशूनां
भ्रेषमनु यजमानः[14] स्वर्गेण लोकेन भ्रेषं[8] न्येति '
स्वर्गस्य लोकस्य भ्रेषमनु तस्यार्धस्य योगक्षेमो भ्रेषं[15]
न्येति यस्मिन्नर्धे यजन्त इति ब्राह्मणम् ' ॥ २ ॥

तद्ध ह स्माह श्वेतकेतुरारुणेयो[16] ब्रह्माणं दृष्ट्वा भा-
षमाणमर्धं[17] मे[18] ऽस्य यज्ञस्यान्तरगादिति ' तस्माद्ब्रह्मा
स्तुते बहिःपवमाने वाचोयम्यमुपांश्वन्तर्यामाभ्यामथ[19] ये
पवमाना[20] श्चोदृचस्तेष्वथ[21] यानि[22] स्तोत्राणि सशस्त्रा-

1) So corr. nach Ait. B. V 33. 3 die hss. यज्ञे वर्त्तत; 2) Sic.; 3) विद्यादर्ध E; 4) यज्ञस्यान्तरग° B; 5) यन्ने° B; 6) रथो E; 7) भ्रेष A, C und B; 8) भ्रेष B und C; 9) Von यज्ञस्य bis नियन्त्यृ° fehlt in B; 10) नेति A; 11) भ्रेषमुत्वत्विजो E; 12) भ्रेष E; 13) °त्विजो E; 14) Von यजमानः bis तस्यार्धस्य fehlt in E; 15) भ्रेष C; 16) श्वेतके° A; °रुणोयो B; °रुणो E; 17) °मर्ध E; 18) म E; 19) वाचोयम्यं?; Ait. B. वाचंयमः; 20) So corr.; °मान alle; 21) A und B उदुचुस्ते°; C उदचुस्ते°; E उदूचुस्ते°; 22) Die hss. fügen hier च ein.

णया[1] वषट्कारान्तेषु[2] 'स यदृक्तो भ्रेषं न्यृच्छेदों[3] भूर्जनदिति गार्हपत्ये जुहुयाद्यदि[4] यजुष्ट[5] ओं भुवो[6] जनदिति दक्षिणाग्नौ जुहुयाद्यदि सामत ओं स्वर्जनदित्याहवनीये जुहुयाद्यद्यनाज्ञाताद्ब्रह्मतो वों भूर्भुवः[7] स्वर्जनदोमित्याहवनीय एव जुहुयात्तंद्वाकोत्राकयस्यर्चां यजुषां साम्नामथर्वाङ्गिरसामंथापि[8] वेदानां रसेन यज्ञस्य विरिष्टं[9] संधीयते' तद्यथा लवणेनेत्युक्तं[10] 'तद्यथोभयपात्पुरुषो यन्नुभयचक्रो वा रथो वर्तमानो ऽभ्रेषं[11] न्येत्येवमेवास्य[12] यज्ञो ऽभ्रेषं[11] न्येति 'यज्ञस्याभ्रेषमनु यजमानो ऽभ्रेषं न्येति 'यजमानस्याभ्रेषमन्वृत्विजो ऽभ्रेषं नियन्त्यृत्विजामभ्रेषमनु[13] दक्षिणा अभ्रेषं[14] नियन्ति 'दक्षिणानामभ्रेषमनु यजमानः पुत्रपशुभिरभ्रेषं[15] न्येति 'पुत्रपशूनामभ्रेषमनु यजमानः स्वर्गेण[16] लोकेनाभ्रेषं न्येति[17] 'स्वर्गस्य लोकस्याभ्रेषमनु तस्यार्धस्य योगक्षेमो[18] ऽभ्रेषं न्येति यस्मिन्नर्धे[19] यजन्त इति ब्राह्मणम्' ॥ ३ ॥

---

1) Die hss. haben चयज्ञा°; 2) °रान्तेषु E; 3) So corr.; die hss. नियछे°; 4) जुहुयादितियदि E; 5) यष्ट B; यजुष्टं E; 6) भूवो B; 7) भुर्भव: B; 8) °मथानि E; 9) विरिष्टं रं विरिष्टं C; 10) लवणोनेत्युक्तं B; vid. Gop. Br. I 1. 14; 11) ऽभ्रेव C; 12) एवं fehlt in C; 13) °त्विज्ञानामभ्रे° C und E; 14) भ्रेषं A und B; 15) भ्रेव C; 16) स्वर्गेणां B; 17) नेति E; 18) योगक्षमो E; 19) यस्मि° A.

तद्यदौदुम्बर्यां[1] म आसिष्ट[2] हिङ्कार्षीन्मे[3] प्रास्तावीन्म उदगासीन्मे[4] सुब्रह्मण्यामाह्वासीदित्युद्गात्रे[5] दक्षिणा नीयन्ते । ग्रहान्मे[6] ऽग्रहीत्प्राचारीन्मे[7] ऽशुश्रुवन्मे[8] समनसस्कार्षीदियाक्षीन्मे[9] ऽवषट्कार्षीन्म इत्यध्वर्यवे । होतृषदन आसिष्टायाक्षीन्मे[10] ऽशांसीन्मे[11] ऽवषट्कार्षीन्म[12] इति होत्रे । देवयजनं[13] मे ऽचीकॢपद्ब्रह्मासादं[14] मे ऽसीसृपद्ब्रह्मजपान्मे[15] ऽजपीत्पुरस्ताद्धोमसंस्थितहोमान्मे ऽहौषीदयाक्षीन्मे ऽशांसीन्मे ऽवषट्कार्षीन्म[16] इति ब्रह्मणे[17] । भूयिष्ठेन मा[18] ब्रह्मणाकार्षीदित्येतद्वै[19] भूयिष्ठं ब्रह्म यद्भृग्वङ्गिरसो । ये[20] ऽङ्गिरसः[20] स रसो ये[21] ऽथर्वाणो[21] ये ऽथर्वाणस्तद्भेषजं । यद्भेषजं तदमृतं यदमृतं तद्ब्रह्म । स वा एष[22] पूर्वेषामृत्विजामर्धभागस्यार्धमितरेषामर्धं[23] ब्रह्मण इति ब्राह्मणम् । ॥ ४ ॥

---

1) So corr. A, B und C °दुम्बर्यान् ; E °दुम्बर्यं ; 2) आश्रिष्ट C und E ; 3) So corr. die hss. हिंकृणोत् ; 4) उदक आसीन्मे A sec. m. ; 5) °त्युहात्रे E ; 6) ग्राहान्मे B und C ; 7) °चोरीन्मे B ; 8) ग्युश्रवन्मे E ; 9) समनसस्कार्षीत् ? ? ; 9) A, B und C fügen ऽशांसीन्मे ein ; 10) आश्रिष्टा° C ; 11) शंसीन्मे C ; शांशीन्मे E ; 12) °ट्कार्षन्म E ; 13) °जनां E ; 14) °सादन C ; 15) सीदयद्ब्र° C ; सीस्वपद्ब्रह्मासादन्ते E ; 16) ऽवषट्कारिसीन्म C ; °षान्म E ; 17) ब्रह्मणो E ; 18) मा ? vielleicht मे ; 19) ब्रह्मणान्कार्षीदित्येताद्धे B ; 20) In A zweimal ये ऽङ्गिरसः ; 21) Wahrscheinlich Dittografie ; 22) एवं E ; 23) °भागसार्ध° B und C.

देवाश्च[1] ह वा असुराश्च संग्रामं समयतन्त ' तत्रैतास्तिस्रो होत्रा[2] जिह्मं प्रतिपेदिरे ' तासामिन्द्र उक्थानि[3] सामानि लुलोप ' तानि होत्रे प्रायच्छदाज्यं ह वै होतुर्बभूव ' प्रउगं पोतुर्वैश्वदेवं ह[4] वै[4] होतुर्बभूव[4] ' निष्केवल्यं नेष्टुर्मरुत्वतीयं ह वै होतुर्बभूवाग्निमारुतमाग्नीध्रस्य ' तस्मादेतदभ्यस्ततरमिव शस्यते यदाग्निमारुतं[5] ' तस्मादेते[6] संशंसुका[7] इव भवन्ति यद्धोता पोता नेष्टाग्नीध्रो मुमुहे[8] वसीत[8] ' तद्ब्रह्मेयसामिवास ' तासामर्धं[9] प्रतिलुलोप[10] प्रथमार्हणं च प्रथमपदं[11] चैतद्दक्षिणां[12] चैतत्परिशिषेदिति[13] ब्राह्मणम् ' ॥ ५ ॥

उद्दालको ह वा आरुणिरुदीच्यान्वृतो[14] धावयां चकार ' तस्य ह निष्क[15] उपाहितो बभूवोपवादाद्बिभ्यतो[16] यो मा[17] ब्राह्मणोऽनूचान उपवदिष्यति[18] तस्मा एतं प्रदास्यामीति ' तद्धोदीच्यान्ब्राह्मणान्भयं[19] विवेदो-

1) देवश्च A; 2) So corr.; die hss. होत्रका; 3) उच्छानि B und C; 4) ह वै होतुः fehlt in E; 5) यदाग्नीमरुतं E; 6) °देतं C und E; 7) शंशंसुका E; 8) मुमोह A, B und E; besser wäre: मोह एवासीत्; 9) तासामर्धे E; 10) प्रती° A; 11) प्रथमं पदं C; 11) und 12) प्रथपदैतद्दक्षणां E; 13) Sic! चैतत्परिशिषेदिति C; 14) आरुणिरुदि° E; 15) निस्क C; 16) °दाद्विभ्यतो B; °दाद्विभाता C; 17) मां A und B; 18) °दिष्यत B; 19) °ह्मणा भयं E.

द्दालको ह वा अयमायाति[1] कौरुपञ्चालो[2] ब्रह्मा[3] ब्रह्मपुत्रः । स[4] ऊर्ध्वं[4] वृतो[4] न[4] पर्यादधीत[4] । केनेमं वीरेण प्रतिसंयतामह्वा इति । तं यत एव[5] प्रपन्नं दध्रे तत एवमनुप्रतिपेदिरे[6] । ते[7] ह स्वैदायनं शौनकमूचुः स्वैदायन त्वं वै नो ब्रह्मिष्ठो[8] ऽसीति । त्वयेमं वीरेण प्रतिसंयतामह्वा इति । तं यत एव प्रपन्नं[9] दध्रे तत एवमनुप्रतिपेदिरे[10] । तं ह स्वैदायना[11] इत्यामन्त्रयामास । स भो[12] गौतमस्य[13] पुत्रेति[14] हास्मा असूया[15] प्रतिश्रुतं प्रतिशुश्राव । स वै गौतमस्य[16] पुत्र ऊर्ध्वं[17] वृतो धावेत्[18] ॥ ६ ॥

यस्तद्दर्शपूर्णमासयो[19] ब्रूयं[20] विद्यात्कस्मादिमाः[21] प्रजाः शिरस्तः प्रथमं लोमशा जायन्ते कस्मादासामपरमिव श्मश्रूण्युपकक्षाण्यन्यानि[22] लोमानि जायन्ते । यस्तद्दर्शपूर्णमासयो ब्रूयं विद्यात्कस्मादिमाः[23] प्राजाः शिरस्तः[24] प्रथमं

---

1) अमयति E; 2) °पाञ्चलो B; 3) ब्राह्मा B; 4) Corrupt. 5) एवं C; 6) l. एनम° ?; 7) So corr.; तं A, C und E; त B; 8) ब्रह्मेषु E; 9) प्रपन्न B; 10) l. एनम° ?; 11) स्मैदा° B; 12) So corr.; die hss. हो; 13) गोतमस्य A pr. m.; B und C; 14) So corr.; पुत्रेतीति A, B und C; पुत्रोतीति E; 15) असूयात् A, C und E; 16) गोतमस्य A sec. man. B und C; 17) उर्ड E; 18) So corr.; A, B und C धावीत्; E धावीत; 19) असूद्र्शपू° E; 20) रूपं B; 21) कस्मात् sic!; 22) °पयनामि E; 23) °स्मादिमां E; 24) Von शिरस्तः bis अदन्तिका fehlt in B und C.

पलिता भवन्ति कस्मादन्तः[1] सर्वा एव पलिता भवन्ति ' यस्तद्दर्शपूर्णमासयो रूपं विद्यात्कस्मादिमाः प्रजा अदन्तिका जायन्ते कस्मादासामपरमिव[2] जायन्ते ' यस्तद्दर्शपूर्णमासयो रूपं विद्यात्कस्मादासां सप्तवर्षाष्टवर्षाणां[3] प्रभिद्यन्ते कस्मादासां[4] पुनरेव जायन्ते[5] कस्मादन्तः सर्व एव प्रभिद्यन्ते ' यस्तद्दर्शपूर्णमासयो रूपं[6] विद्यात्कस्मादधरे दन्ताः पूर्वे[7] जायन्ते पर उत्तरे ' यस्तद्दर्शपूर्णमासयो रूपं विद्यात्कस्मादधरे दन्ता अणीयांसो ह्रसीयांसः[8] प्रथीयांसो वर्षीयांस[9] उत्तरे ' यस्तद्दर्शपूर्णमासयो रूपं विद्यात्कस्मादिमौ दंष्ट्रौ दीर्घतरौ कस्मात्समे इव[10] जंभे[11] ' यस्तद्दर्शपूर्णमासयो रूपं विद्यात्कस्मादिमे श्रोत्रे अन्तरतः समे इव दीर्णे ' यस्तद्दर्शपूर्णमासयो रूपं विद्यात्कस्मात्पुमांसः श्मश्रुवन्तो[12] ऽश्मश्रुवः स्त्रियो ' यस्तद्दर्शपूर्णमासयो रूपं विद्यात्कस्मादासां संततमिव शरीरं भवति कस्मादासामस्थीनि दृढतराणीव[13] भवन्ति ' यस्तद्दर्शपूर्णमासयो रूपं विद्यात्कस्मादासां प्रथमे वयसि रेतः सिक्तं न संभवति

---

1) Fehlt in E; 2) °परिमिव B; 3) °र्षाणा B; °ष्टवर्षा° fehlt in E; 4) °दासा E; 5) जायते B; 6) रूप B; 7) Von पूर्वे bis अणीयांसः fehlt in E; 8) ह्रसीयासः B; 9) वर्षीयांस B und E; 10) इमेव A und C; 11) जाम्भे B; 12) श्मश्रवतो B; 13) दृढतराणी C;

कस्मादासां[1] मध्यमे वयसि रेतः सिक्तं संभवति कस्मादासामुत्तमे वयसि रेतः सिक्तं न संभवति । यस्तद्दर्शपूर्णमासयो रूपं विद्यात्कस्मादिदं शिश्नमुच्चश[2] इति नीची[3] पद्यते । कस्मात्सकृदपानम्[4] ॥ ७ ॥

अथ[5] यः[5] पुरस्तादष्टावाज्यभागान्विद्यान्मध्यतः पञ्च हविर्भागाः षट्प्राजापत्या उपरिष्टादष्टावाज्यभागान्विद्यादथ यो गायत्रीं[6] हरिणीं[7] ज्योतिष्यत्तां[8] सर्वैर्यज्ञैर्यजमानं स्वर्गं लोकमभिवहन्तीं[9] विद्यादथ यः पङ्क्तिं[10] पञ्चपदां सप्तदशाक्षरां सर्वैर्यज्ञैर्यजमानं स्वर्गं लोकमभिवहन्तीं[11] विद्यात्तस्मै ह निष्कं प्रयच्छन्नुवाचानूचानो[12] ह वै स्वैदायनासि[13] सुवर्णं[14] वै[14] सुवर्णविदे[15] ददामीति । तदुपयम्य निश्चक्राम[16] । तत्रापवव्राज[17] यत्रेतरो बभूव । तं ह पप्रच्छ[18] किमेष गौतमस्य[19] पुत्र इत्येष ब्रह्मा ब्रह्मपुत्र[20] इति होवाच[21] यदेनं कश्चिदुपवदेतोत[22] मीमां-

---

1) °दासा E; 2) उच्चश्न sic!; 3) नीची corrupt; 4) °दपादानम् C; °दयानम् E; 5) अप्रथः E; 6) गायित्रीं C; 7) हरीणीं E; 8) ज्योतिष्यं E; ज्योतिष्पत्ता C; 9) °वहन्ती E; °वहन्तिं C; 10) पङ्क्ति A pr. m. und E; 11) °वहन्तिं C; वहन्ती E; 12) प्रयतनु° E; 13) So corr. A, C und E °यनास; B स्वेदायनांस; 14) सुवर्णात्वै C; वै fehlt in E; 15) Nur विदे in E; C fügt ह ein; 16) निश्चक्रम्य A und E; 17) So corr.; तत्रापव्राज A sec. man. und B, तत्रपव्रज C; तत्रापव्रज E und A pr. m.; 18) प्रयच्छ C; 19) गोत° A sec. m., B, C und E; 20) ब्रह्म B; 21) होवांच B; 22) °देतौत B; °देतोतं A.

सेत[1] ह्[2] वा[2] मूर्धा वा[2] अस्य[2] विपतेत्प्राणा वैनं जह्युरिति[3] ' ते मिथ एव चिक्रन्देयुर्विप्रापवव्रज[4] यत्रेतरो बभूव[5] ' ते प्रातः समित्पाणय उपोदियुरुपायामो भवन्तमिति ' किमर्थमिति ' यानेव नो भवांस्तान्ह्यः प्रश्नानपृच्छत्तानेव[6] नो भवान्व्याचक्षीतेति[7] ' तथेति ' तेभ्य एतान्प्रश्नान्व्याचचष्टे[8] ॥ ८ ॥

यत्पुरस्ताद्वेदेः प्रथमं बर्हि स्तृणाति तस्मादिमाः प्रजाः शिरस्तः प्रथमं लोमशा जायन्ते ' यदपरमिव प्रस्तरमनुप्रस्तृणाति तस्मादासामपरमिव श्मश्रूण्युपकक्षाण्यन्यानि[9] लोमानि जायन्ते ' यत्प्राग्बर्हिषः प्रस्तरमनुप्रहरति तस्मादिमाः प्रजाः शिरस्तः प्रथमं[10] पलिता भवन्ति ' यदन्ततः सर्वमेवानुप्रहरति तस्मादन्ततः सर्व एव पलिता भवन्ति ' यत्प्रयाजा[11] अपुरोऽनुवाक्यावन्तो[12] भवन्ति तस्मादिमाः प्रजा अदन्तिका जायन्ते ' यद्धवींषि[13] पुरोऽनुवाक्यावन्ति भवन्ति तस्मादासामपरमिव जायन्ते ' यदनुयाजा अपुरो-

---

1) मांसेति B; 2) Corrupt; 3) So B. Ind.; die hss. जह्यु°; 4) चिक्रन्देयुः corrupt °र्विप्रापव्रज A und B; °र्विप्रा अपव्रज C und E; corrupt; 5) बभूव: A und E; बभूवु: B und C; 6) So corr.; A und B °पृच्छया-नेव, C °पृच्छयानेव, E °पृच्छायानेव; 7) So corr.; die hss. °येति; 8) Vgl. I 2, 13; 9) श्मश्रूण्यु° B; श्मश्रूण्यपक° C; °कक्षाण्यानि E; 10) Von प्रथमं bis यत्प्रयाजा fehlt in E; 11) यत्प्रजाता C; 12) अपुरेऽनु° E; 13) यदूव्रवींषि B.

ऽनुवाक्यावन्तो भवन्ति तस्मादासां सप्तवर्षाष्टवर्षाणां[1] प्रभिद्यन्ते ' यत्पत्नीसंयाजाः पुरोऽनुवाक्यावन्तो[2] भवन्ति तस्मादासां पुनरेव जायन्ते ' यत्समिष्टयजुरपुरोऽनुवाक्यावद्भवति[3] तस्मादन्ततः सर्व एव प्रभिद्यन्ते[4] ' यद्गायत्र्यानूच्य[5] त्रिष्टुभा[6] यजति तस्मादधरे[7] दन्ताः[8] पूर्वे जायन्ते पर उत्तरे ' यदृचानूच्य यजुषा[9] यजति तस्मादधरे दन्ता अणीयांसो ह्रसीयांसः[10] प्रथीयांसो वसीयांस[11] उत्तरे ' यदाघारौ दीर्घतरौ प्राञ्चावाघारयति[12] तस्मादिमौ दंष्ट्रौ दीर्घतरौ ' यत्संयाज्ये सच्छन्दसी[13] तस्मात्समे इव जम्भे ' यच्चतुर्थे प्रयाजे[14] समानयति तस्मादिमे श्रोत्रे अन्तरतः समे इव दीर्णे ' यज्जपं जपित्वाभिहिंकृणोति तस्मात्पुमांसः श्मश्रुवन्तो[15] ऽश्मश्रुव[16] स्त्रियो ' यत्सामिधेनीः संतन्वन्नन्वाह[17] तस्मादासां संततमिव शरीरं भवति[18] ' यत्सामिधेन्यः काष्ठहविषो भवन्ति तस्मादासामस्थीनि दृढतराणीव[19] भवन्ति ' यत्प्रयाजा आज्यहविषो भवन्ति तस्मा-

---

1) °वर्षाणा C; 2) °वाक्यवन्ति E; 3) यत्समिष्ट° E; 4) प्रतिभिद्यन्ति E; 5) °नूच्च B; 6) C fügt च ein; 7) °दधार C; 8) Von दन्ताः bis अणीयांसः fehlt in B; 9) यजुष E; 10) ह्रणीयांसः B; 11) वसीयांस B; वषीयीयांस E; 12) प्रज्ञाञ्चा° C; 13) संछन्दसि A; संछन्दसी B und E; 14) प्रजायाजे B; प्रयाजे C; 15) Fehlt in E; 16) श्मश्रुवं B; 17) So corr. संतन्वन्नाह A, C und E; संतन्वना ह B; 18) भवन्ति B; 19) दृढतणीव B.

दासां प्रथमे वयसि रेतः सिक्तं न संभवति ' यन्मध्ये हविषां[1] दध्ना च पुरोडाशेन च[2] प्रचरन्ति तस्मादासां मध्यमे वयसि रेतः सिक्तं संभवति[3] ' यदनुयाजा आज्यहविषो[4] भवन्ति तस्मादासामुत्तमे वयसि रेतः सिक्तं न संभवति[5] ' यदुत्तमे ऽनुयाजे सकृदयानिति तस्मादिदं शिश्नमुच्चश[6] इति नीचीपद्यते[7] ' यन्नापानित्सकृच्छूनं स्याद्यन्मुहुरपानित्सकृत्पन्नं स्यात्तस्मात्सकृदयानिति नेत्सकृच्छूनं स्यात्सकृत्पन्नं वेति ' ॥ १ ॥

अथ ये पुरस्तादष्टावाज्यभागाः पञ्च प्रयाजा[8] द्वावाघारौ[9] द्वावाज्यभागावाग्नेय[10] आज्यभागानां प्रथमः सौम्यो[11] द्वितीयो[12] हविर्भागानां ' हविर्ह्येव सौम्यमाग्नेयः पुरोडाशो ' ऽग्नीषोमीय उपांशुयाजो[13] ' ऽग्नीषोमीयः पुरोडाशो ऽग्निः स्विष्टकृदित्येते मध्यतः पञ्च हविर्भागा ' अथ ये षट् प्राजापत्या[14] इडा च प्राशित्रं च यच्चाग्नीध्रायावद्यति ब्रह्मभागो यजमानभागो ऽन्वाहार्य[15] एव षष्ठो ' ऽथ य उपरिष्टादष्टावाज्यभागास्त्रयो[16] ऽनुयाजाश्चत्वारः पत्नीसं-

---

1) हविषो E; 2) च fehlt in A pr. m.; B, C und E; 3) संभवन्ति B; 4) आज्यहविषो C; 5) संभवन्ति E; 6) उच्चशस् corrupt! 7) नीची corrupt; 8) प्रजाया C; प्रयति B; 9) हि वाघारौ B; 10) द्वावाज्य° E; 11) सोम्य B; 12) द्वितीयौ C; 13) उपांसु° E; 14) °जापत्य A pr. m.; 15) ऽन्वाहार्य E; 16) उरिष्टावाज्य° B.

याज्ञाः समिष्टयजुरष्टममथ या गायत्री[1] हरिणी[2] ज्योतिष्पक्षा[3] सर्वैर्यज्ञैर्यजमानं[4] स्वर्गं लोकमभिवहति वेदिरेव सा[5] ' तस्य ये पुरस्तादष्टावाज्यभागाः स दक्षिणः पक्षो ' ऽथ य उपरिष्टादष्टावाज्यभागाः स उत्तरः पक्षो ' हविष्यात्मा ' गार्हपत्यो जघनमाहवनीयः[6] शिरः ' सौवर्णराजतौ पक्षौ ' तद्यदादित्यं पुरस्तात्पर्यन्तं न पश्यन्ति तस्मादुज्योतिष्क उत्करो[7] भवत्यथ या पङ्क्तिः पञ्चपदा[8] सप्तदशाक्षरा सर्वैर्यज्ञैर्यजमानं स्वर्गं[9] लोकमभिवहति[10] याज्यैव[11] सा ' तस्या ओं श्रावयेति चतुरक्षरमस्तु[12] श्रौषदिति चतुरक्षरं ' यजेति[13] द्व्यक्षरं[14] ' ये[15] यजामहे[15] इति पञ्चाक्षरं ' द्व्यक्षरो[16] वै वषट्कारः ' सैषा पङ्क्तिः पञ्चपदा सप्तदशाक्षरा सर्वैर्यज्ञैर्यजमानं[17] स्वर्गं[18] लोकमभिवहति ' तद्यत्रास्यैश्वर्यं स्याद्यत्र वैनमभिवहेयुरेवंविदमेव तत्र ब्रह्माणं वृणीयान्नानेवंविदमिति[19] ब्राह्मणम् ' ॥ १० ॥

अथ ह प्राचीनयोग्य आजगामाग्निहोत्रं भवन्तं पृच्छा-

---

1) गायत्रीं B; 2) हरणी B; 3) ज्योतिष्पक्षां E; 4) °जमान C; 5) सां B; 6) °हवनी: E; 7) उत्तरो B; उत्तरे C; उतरो E; 8) °पदात् E; 9) स्वर्ग B und C; 10) लोकमतिवहति C; 11) यां येव E; 12) चतुरक्षमस्तु E; 13) यक्षेति A, B und C; 14) द्वक्षरं C; 15) ये: यजामह B; ये यज्यामह C; य यजजामह E; 16) द्व्यक्षरौ E; 17) यज्ञै: fehlt in A; 18) स्वर्ग E; 19) दृणीयान्नने° E.

मि[1] गौतमेति[2] ' पृच्छ[3] प्राचीनयोग्येति[4] ' किंदेवत्यं ते गवीडायां[5] ' किंदेवत्यमुपह्वतायां ' किंदेवत्यमुपसृष्टायां ' किंदेवत्यं[6] वत्समुन्नीयमानं[7] किंदेवत्यं वत्समुन्नीतं[7] ' किंदेवत्यं दुह्यमानं ' किंदेवत्यं दुग्धं ' किंदेवत्यं प्रक्रम्यमाणं ' किंदेवत्यं ह्रियमाणं[8] ' किंदेवत्यमधिश्रीयमाणं[9] ' किंदेवत्यमधिश्रितं ' किंदेवत्यमभ्यवज्वाल्यमानं[10] ' किंदेवत्यमभ्यवज्वालितं ' किंदेवत्यं समुद्वान्तं[11] ' किंदेवत्यं विष्यन्नं ' किंदेवत्यमद्भिः[12] प्रत्यानीतं ' किंदेवत्यमुद्वास्यमानं ' किंदेवत्यमुद्वासितं[6] ' किंदेवत्यमुन्नीयमानं[6] ' किंदेवत्यमुन्नीतं[6] ' किंदेवत्यं[6] प्रक्रम्यमाणं[6] ' किंदेवत्यं ह्रियमाणं[13] ' किंदेवत्यमुपसाद्यमानं[14] किंदेवत्यमुपसादितं ' किंदेवत्या[15] समित्किंदेवत्यां[16] प्रथमामाहुतिमहौषीः ' किंदेवत्यं गार्हपत्यमवेक्षिष्ठाः ' किंदेवत्योत्तराहुतिः ' किंदेवत्यं हुत्वा स्रुचं त्रिरुदक्समुदनैषीः[17] ' किंदेवत्यं बर्हिषि स्रुचं[18] निधायोन्मृज्योत्तरतः पाणी निर-

1) So corr. vgl. I 3. 13, die hss. पृच्छेद्; 2) गोतम इति A sec. m. und B; गोतमेति C und E; 3) पृच्छं B; 4) °योग्नेति A; 5) गविडायां A; 6) Fehlt in E; 7) Corrupt! 8) ह्रीय° A pr. m. und E; 9) °श्रियमाणां A sec. m. und C; 10) °देवत्यमध्य° B; 11) समुढान्तं C, समुद्रान्तं E; 12) Von किं° bis उन्नीयमानं fehlt in B; 13) ह्रीयमाणां A und E; 14) °पसद्यमानं C; 15) °देवत्यममिकं किं A; 16) °देवत्या E; 17) So corr.; die hss. °मुन्नैषी:; 18) स्रुच E.

मार्क्षीः[1] ' किंदेवत्यं द्वितीयमुन्मृज्य पित्र्युपवीतं कृत्वा दक्षिणतः पितृभ्यः स्वधामकार्षीः ' किंदेवत्यं प्रथमं[2] प्राशीः ' किंदेवत्यं द्वितीयं ' किंदेवत्यमन्ततः सर्वमेव[3] प्राशीः ' किंदेवत्यमप्रक्षालितयोदकं स्रुचा न्यनैषीः ' किंदेवत्यं प्रक्षालितया ' किंदेवत्यमपरेणाहवनीयमुदकं स्रुचा[4] न्यनैषीः[5] ' किंदेवत्यं स्रुवं[6] स्रुचं[7] च प्रत्यताप्सीः ' किंदेवत्यं रात्रौ स्रुग्दण्डमवामार्क्षीः[8] ' किंदेवत्यं प्रातरुदमार्क्षीरित्येतच्चेद्वेत्थ[9] गौतम हुतं ते[10] यद्यु न वेत्थाहुतं त[11] इति ब्राह्मणम् ' ॥ ११ ॥

स होवाच रौद्रं[12] मे गवीडायां ' मानव्यमुपहूतायां ' वायव्यमुपसृष्टायां ' वैराजं वत्समुन्नीयमानं ' जागतमुन्नीतमाश्विनं[13] दुह्यमानं ' सौम्यं[14] दुग्धं ' बार्हस्पत्यं प्रक्रम्यमाणं ' द्यावापृथिव्यं[15] ह्रियमाणमाग्नेयमधिश्रीयमाणं[16] ' वैश्वानरीयमधिश्रितं ' वैष्णवमभ्यवज्वाल्यमानं ' मारुतम-

---

1) So corr.; die hss. निर्मार्क्षीः A; निर्मार्क्षी: B, C und E; 2) प्रथम E; 3) सर्वमेवा A, B und E; 4) स्रूचा B; 5) न्यनीषी: C; 6) स्रुक् C und B; 7) स्रुवं C; fehlt in E; 8) °वमार्क्षीः A, B und C; °वमार्क्षी: E; 9) So corr.; A und B प्रातरुन्मार्क्षी°; C und E प्रातरुन्मार्क्षी°; 10) So corr.; die hss. चेद्; 11) च E; 12) रौद्र् B; 13) जागतमुन्नित° B; 14) सौम्य B; 15) द्याश्विवापृथिव्यां B; °विव्यां A und C; 16) ह्रीयमा° A und E.

भ्यवज्वालितं' पौष्णां[1] समुद्रान्तं' वारुणं विष्यन्नं' सार-
स्वतमद्भिः प्रत्यानीतं' त्वाष्ट्रमुद्वास्यमानं' धात्रमुद्वासितं'
वैश्वदेवमुन्नीयमानं[2]' सावित्रमुन्नीतं[3]' बार्हस्पत्यं प्रक्रम्य-
माणं' द्यावापृथिव्यं[4] ह्रियमाणमैन्द्रमुपसाद्यमानं[5]' ब्र-
ह्मायोपसन्नमांग्नेयी[6] समिध्यां[7] प्रथमामाहुतिमहौषं मामेव
तत्स्वर्गे लोके ऽधां' यद्गार्हपत्यमवेक्षिषमस्य[8] लोकस्य
संतत्यै[9]' प्राजापत्योत्तराहुतिस्तस्मात्पूर्णतरा[10] मनसैव
सा' यद्धुत्वा स्रुचं[11] त्रिरुदञ्चमुदनैषं[12] रुद्रांस्तेनाप्रैषं[13]'
यद्बर्हिषि स्रुचं[14] निधायोन्मृज्योत्तरतः पाणी[15] निरमा-
र्क्ष्मोषाधिवनस्पतींस्तेनाप्रैषं[16]' यद्द्वितीयमुन्मृज्य पित्र्युप-
वीतं कृत्वा दक्षिणतः पितृभ्यः स्वधामकार्षं[17] पितॄंस्ते-
नाप्रैषं[18]' यत्प्रथमं प्राशिषं प्राणांस्तेनाप्रैषं[19]' यद्द्वितीयं
गर्भांस्तेन[20]' तस्मादनश्नन्तो गर्भा जीवन्ति[21]' यदन्ततः
सर्वमेव प्राशिषं[22] विश्वान्देवांस्तेनाप्रैषं[23]' यदप्रक्षालित-

---

1) पौष्णा E; 2) Fehlt in E; 3) सावित्रम् fehlt in E; 4) °पृथिव्यां A pr. m.; B und C; 5) ह्रीय° A und E; 6) Sic! 7) समीधां E; समिधा B; 8) धा यद्गा° B; 9) सतत्यै C und E; 10) प्राजपत्यो° B; 11) स्रुवं B; स्रुतं E; 12) So corr.; die hss. °मुन्नैषं; 13) रुद्रास्ते° B; 14) श्रुतं E; 15) पाणि E; 16) So corr.; A, B und E निर्मार्क्ष्यमो°; C निर्मार्क्ष्मो°; 17) °मकार्ष B; 18) °नाप्रैषा E; 19) प्राणांस्ते° A; 20) गर्भस्तेन B; 21) जीवन्ते B; 22) सर्वामवाप्राशिषं C; 23) विश्वा-न्देवास्ते° E.

योदकं स्रुचा न्यनैषं[1] सर्पेतरजनांस्तेनाप्रैषं ' यत्प्रक्षालि-
तया[2] सर्वपुण्यजनांस्तेन[3] ' यदपरेणाहवनीयमुदकं स्रुचा
न्यनैषं गन्धर्वाप्सरसस्तेनाप्रैषं ' यत्स्रुवं[4] स्रुचं च प्रत्यता-
प्सं[5] सप्तर्षींस्तेनाप्रैषं ' यद्रात्रौ स्रुग्दण्डमवामार्क्षं[6] ये रात्रौ
संविशन्ति दक्षिणांस्तानुदनैषं[7] ' यत्प्रातरुदमार्क्षं[8] ये प्रातः
प्रव्रजन्ति दक्षिणांस्तानुदनैषमिति[9] ब्राह्मणम् ' ॥ १२ ॥

एवमेवैतद्वो यथा भवानाह ' पृच्छामि त्वेव[10] भव-
न्तमिति ' पृच्छ प्राचीनयोग्येति ' यस्य सायमग्नय उपसमा-
हिताः स्युः सर्वे ऽवक्षयेयुः[11] प्रक्षालितानि यज्ञपात्रा-
ण्युपसन्नानि[12] स्युरथ चेद्दक्षिणाग्निरुद्वायात्किं वा ततो
भयमागच्छेदिति ' क्षिप्रमस्य पत्नी प्रैति यो ऽविद्वाञ्जुहोति '
विद्यया त्वेवाहमभिजुहोमीति[13] ' का ते विद्या का
प्रायश्चित्तिरिति ' गार्हपत्यादधि दक्षिणाग्निं प्रणीय प्राचो[14]
ऽङ्गारानुद्धृत्य प्राणापानाभ्यां[15] स्वाहेति जुहुयादथ[16] प्रा-
तर्यथास्थानमग्नीनुपसमाधाय यथापुरं जुहुयात्सा[17] मे

1) न्यनैव E; 2) °लितयो B; 3) °नंजेन B; 4) यत्स्रुव E; 5) प्रत्यताप्स B; 6) So corr. °वमार्क्ष्य A und B; °वमार्क्ष C und E; 7) So corr.; die hss. °नुन्नैषं; 8) Vgl. 6; 9) Vgl. 7; 10) त्वेवं B; त्वेमो E; 11) ऽवलयेयु E; 12) °सन्तानि E; सन्ननि C; 13) °हो-मिति C; 14) प्राक्षो C; 15) प्राणाणायानाभ्यां E; 16) Statt जुहुयाद् erwartet man hier und an den folgenden Stellen जुहुयात्; 17) जुहू° C.

विद्या ' सा प्रायश्चित्तिरित्यंथ चेदाहवनीय उद्वायात्किं वा
ततो भयमागच्छेदिति[1] ' क्षिप्रमस्य पुत्रः प्रैति[2] यो ऽवि-
द्वाञ्जुहोति ' विद्यया त्वेवाहमभिजुहोमीति ' का ते विद्या
का[3] प्रायश्चित्तिरिति ' गार्हपत्यादध्याहवनीयं प्रणीय[4]
प्रतीचो ऽङ्गारानुद्धृत्य[5] समानव्यानाभ्यां स्वाहेति जुहुया-
दंथ[6] प्रातर्यथास्थानमग्नीनुपसमाधाय[7] यथापुरं जुहुयात्सा
मे विद्या सा प्रायश्चित्तिरित्यंथ चेद्गार्हपत्य उद्वायात्किं
वा ततो भयमागच्छेदिति ' क्षिप्रं गृहपतिः प्रैति यो
ऽविद्वाञ्जुहोति ' विद्यया त्वेवाहमभिजुहोमीति[8] ' का ते
विद्या का प्रायश्चित्तिरिति[9] ' सभस्मकमाहवनीयं दक्षि-
णेन दक्षिणाग्निं परिहृत्य गार्हपत्यस्यायतने प्रतिष्ठाप्य
तत आहवनीयं प्रणीय[10] उदीचो ऽङ्गारानुद्धृत्योदानरू-
पाभ्यां[11] स्वाहेति जुहुयादथ प्रातर्यथास्थानमग्नीनुपसमा-
धाय[12] यथापुरं जुहुयात्सा मे विद्या सा प्रायश्चित्तिरि-
त्यंथ[13] चेत्सर्वे ऽग्नय उद्वायेयुः किं वा ततो भयमागच्छे-

---

1) भयमा fehlt in B; 2) प्रैरित्त C; 3) Fehlt in E; 4) प्रणीया B; 5) गारानुद्धत्य B und E; 6) °यादृथ B; 7) Von अग्नीन् bis इत्यथ fehlt in A pr. man., B, C und E und diese haben statt इत्यथ, इत्येवाथ; 8) तेवाह° E; 9) इति fehlt in E; 10) प्रणायेद् A pr. man.; प्रणायेद् B; प्रणीयेद् C; प्रणोये E; 11) गारानु° B und E; 12) Von अग्नीन् bis इत्यथ fehlt in A pr. m., B, C und E; und statt इत्यथ haben die hss. इत्येवाथ; 13) Von इत्याथ bis त्वेवा° fehlt in E.

दिति ' क्षिप्रं गृहपतिः सर्वज्यानिं[1] जीयते यो ऽविद्वाञ्जुहोति ' विद्यया त्वेवाहमभिजुहोमीति[2] ' का ते विद्या का प्रायश्चित्तिरित्यानडुहेन शकृत्पिण्डेनाग्न्यायतनानि[3] परिलिप्य होम्यमुपसाद्याग्निं[4] निर्मथ्य प्राणापानाभ्यां स्वाहा समानव्यानाभ्यां स्वाहोदानरूपाभ्यां[5] स्वाहेति जुहुयादथ प्रातर्यथास्थानमग्नीनुपसमाधाय[6] यथापुरं जुहुयात्सा मे विद्या सा प्रायश्चित्तिरित्यथ चेन्नाग्निं जनयितुं[7] शक्नुयुर्न[8] कुतश्चन वातो वायात्किं वा ततो भयमागच्छेदिति ' मोघमस्येष्टं च हुतं च भवति यो ऽविद्वाञ्जुहोति ' विद्यया त्वेवाहमभिजुहोमीति ' का ते विद्या का प्रयश्चित्तिरित्यानडुहेनैव[9] शकृत्पिण्डेनाग्न्यायतनानि[10] परिलिप्य होम्यमुपसाद्य वात[11] आ वातु भेषजमिति सूक्तेनात्मन्येव जुहुयादथ प्रातरग्निं[12] निर्मथ्य यथास्थानमग्नीनुपसमाधाय[13] यथापुरं जुहुयात्सा[14] मे विद्या सा प्रायश्चित्तिरिति ब्राह्मणम् ' ॥ १३ ॥

एवमेवैतद्वो भगवन्यथा भवानाहोपयामि त्वेव[15]

1) सर्वज्यनिं A; सर्वज्यनं C; 2) °होमति B; 3) सकृर्वत्यपदेता° E; 4) °पसद्याग्निं B; °पसाद्याग्नि C und E; 5) °ज्ञूप·यां C; 6) Vgl. Seite ८१ Note 12; 7) जनयितु E; 8) शंकुर्युन्न B; शक्नुर्युर्न C; शक्तुर्युर्न E; 9) °नुडुहे° A und B; °त्यान्तडुहे° E; 10) शकुत्पिण्डेनास्यायतनानि C; 11) वातु C; 12) °रग्नि E; 13) °मग्निनुपसमाध्यय B; 14) जुहुयात्सो B; 15) त्येव A und E; त्वे C.

भवन्तमित्येवं[1] चेन्नावक्ष्यो[2] मूर्धा ते व्यपतिष्यदिति[3]' हन्त तु ते तद्वक्ष्यामि[4] यथा ते न विपतिष्यतीति[5]' यो ह वा एवंविद्वानश्नाति च पिबति च वाक्तेन तृप्यति' वाचि तृप्तायामग्निस्तृप्यत्यग्नौ तृप्ते पृथिवी तृप्यति' पृथिव्यां तृप्तायां यानि पृथिव्यां भूतान्यन्वायत्तानि[6] तानि तृप्यन्ति' यो ह वा[7] एवंविद्वानश्नाति च पिबति च प्राणस्तेन तृप्यति' प्राणे तृप्ते वायुस्तृप्यति' वायौ तृप्ते ऽन्तरिक्षं तृप्यत्यन्तरिक्षे[8] तृप्ते यान्यन्तरिक्षे भूतान्यन्वायत्तानि तानि तृप्यन्ति' यो ह वा एवंविद्वानश्नाति च पिबति च चक्षुस्तेन तृप्यति' चक्षुषि[9] तृप्त[10] आदित्यस्तृप्यत्यादित्ये तृप्ते द्यौस्तृप्यति' दिवि[11] तृप्तायां यानि दिवि भूतान्यन्वायत्तानि[12] तानि[12] तृप्यन्ति[13]' यो ह वा एवंविद्वानश्नाति च पिबति च मनस्तेन तृप्यति[14]' मनसि तृप्ते चन्द्रमास्तृप्यति[15]' चन्द्रमसि तृप्त आपस्तृप्यन्त्यप्सु तृप्तासु यान्यप्सु भूतान्यन्वायत्तानि[16] तानि तृप्यन्ति' यो ह वा एवंवि-

---

1) °त्येव A; 2) वन्नवक्ष्ये C; चेन्तावेक्ष्य B; चेन्नवक्ष्य E; 3) °ष्यतीति A und E; °ष्यदिदिति C; 4) तद्वक्षामि E; 5) व्यपति° A pr. m.; विपतीति E; 6) °यन्तानि E; 7) व: E; 8) तृप्यन्त्येतरिक्षे C; तृप्यन्त्यन्त° E; 9) चक्षुषी A pr. m. und E; 10) तुप्त्य B; तृप्य C; 11) दिविस् B und E; 12) भूतानि C; 13) तृप्यन्तिं E; 14) तृप्यन्तिं E; 15) °प्यन्तिं E; 16) भूतान्वा° B.

द्वानश्नाति च पिबति च श्रोत्रं तेन तृप्यति ' श्रोत्रे तृप्ते दिशश्चान्तर्देशाश्च तृप्यन्ति ' दिक्षु चान्तर्देशेषु च तृप्तेषु यानि दिक्षु चान्तर्देशेषु च[1] भूतान्यन्वायत्तानि[1] तानि तृप्यन्ति ' यो ह वा एवंविद्वानश्नाति च पिबति च तस्यायमेव दक्षिणः पाणिर्जुहूः[2] ' सव्य[3] उपभृत्कण्ठो ध्रुवान्नं[4] हविः ' प्राणा ज्योतींषि[5] ' सदेष्टं[6] सदा हुतं सदाशितं[7] पायितमग्निहोत्रं[8] भवति य एवं वेद यश्चैवं विद्वानग्निहोत्रं जुहोतीति ब्राह्मणम् ' ॥ १४ ॥

प्रियमेधा ह वै भरद्वाजा यज्ञविदो मन्यमानास्ते ह स्म न कञ्चन[9] वेदविदमुपयन्ति ' ते सर्वमविदुस्ते सहैवाविदुस्ते ऽग्निहोत्र[10] एव न समवदन्त[11] ' तेषामेकः सकृदग्निहोत्रमजुहोद्द्विरेकस्त्रिरेकस्तेषां[12] यः सकृदग्निहोत्रमजुहोत्तमितरावपृच्छतां[13] कस्मै त्वं जुहोषीत्येकधा वा इदं सर्वं प्रजापतिः ' प्रजापतय एवाहं सायं जुहोमीति प्रजापतये प्रातरिति ' तेषां यो द्विरजुहोत्तमितरावपृच्छतां

---

1) चक्षूतान्यन्वा° A; 2) °र्जुहु A pr. man. und B; जुहः E; 3) सन्त्य E; सव्यं C; 4) ध्रुवान्न C; 5) ज्योतीषि B; ज्योतींसी A pr. m.; 6) सदेष्ट C; सदेष्टी E; 7) सदासितं E; 8) पाहितम° A; पायितम° E; 9) So corr.; die hss. कञ्चना; 10) So corr.; die hss. ऽग्निहोत्रम्; 11) So corr.; die hss. समवदयन्त; 12) त्रिरेकस् fehlt in E; 13) स्म-कृदग्नि° B.

काभ्यां[1] त्वं जुहोषीत्यंग्नये प्रजापतय[2] इति सायं सूर्याय प्रजापतय इति प्रातस्तेषां यश्चिरजुहोत्तमितरावपृच्छतां केभ्यस्त्वं जुहोषीत्यंग्नये प्रजापतये ऽनुमतय इति सायं सूर्याय प्रजापतये ऽग्नये[3] स्विष्टकृत इति प्रातस्तेषां यो द्विरजुहोत्स आर्ध्नोत्सि भूयिष्ठो ऽभवत्प्रजया चेतरौ[4] श्रिया चेतरावत्याक्रामत्तस्य[5] ह प्रजामितरयोः प्रजे[6] सजातत्वमुपेतां[6] 'तस्माद्द्विर्होतव्यं यजुषा चैव मनसा च 'यामिव स ऋद्धिमार्ध्नोत्तामृध्नोति[7] य एवं वेद यश्चैवं[8] विद्वानग्निहोत्रं जुहोतीति ब्राह्मणम् ' ॥ १५ ॥

स्वाहा वै कुतः संभूता 'केन प्रकृता 'किं वास्या गोत्रं[9] 'कत्यक्षरा 'कतिपदा 'कति वर्णा[10] 'किंपूर्वावसाना 'क्व चित्स्थिता 'किमधिष्ठाना 'ब्रूहि स्वाहाया यद्दैवतं रूपं च 'स्वाहा वै सत्यसंभूता 'ब्रह्मणा[11] प्रकृता 'लामगायनसगोत्रा[12] 'द्वे अक्षरे 'एकं पदं 'त्रयश्च वर्णाः शुक्लः पद्मः सुवर्ण इति 'सर्वच्छन्दसां[13] वेदेषु समासभुतीकोच्छ्वासा वर्णान्ते चत्वारो वेदाः शरीरे 'षडङ्गान्यो-

---

1) काभ्यः C; 2) प्रजापत C; 3) Fehlt in B; 4) चेतरौ ist einmal zu viel; 5) चेतरावत्प्राक्रा° B; 6) So corr. nach Kāṭhakam; die hss. haben प्रजासु यातत्वमुपेयातां; 7) So corr.; die hss. ऋद्धिमार्ध्नोति ता°; 8) यश्चैव E; 9) गात्रां B; 10) Fehlt in B und E; 11) ब्रह्मणः A, C und E; 12) लामकायन° C; 13) °च्छन्दसि E.

षधिवनस्पतयो लोमानि ' चक्षुषी सूर्याचन्द्रमसौ ' सा स्वाहा सा[1] स्वधा सैषा यज्ञेषु वषट्कारभूता प्रयुज्यते[2] ' तस्या अग्निर्दैवतं ' ब्राह्मणो[3] रूपमिति ब्राह्मणम् ' ॥ १६ ॥

अथापि कारवो ह नाम ऋषयो ऽल्पस्वा आसंस्त इममेकगुमग्निष्टोमं ददृशुस्तमाहरंस्तेनायजन्त ' ते स्वर्ययुः ' स य[4] इच्छेत्स्वरियामिति[5] स एतेनैकगुनाग्निष्टोमेन यजेतेति ब्राह्मणम् ' ॥ १७ ॥

अथातः सवनीयस्य पशोर्विभागं व्याख्यास्याम[6] ' उद्धृत्यावदानानि[7] हनू सजिह्वे[8] प्रस्तोतुः ' कण्ठः[9] सकाकुद्रः[10] प्रतिहर्तुः ' श्येनं[11] वक्ष[12] उद्गातुर्दक्षिणं पार्श्वं सांसमध्वर्योः[13] ' सव्यमुपगातृणां ' सव्यो ऽंसः[14] प्रतिप्रस्थातुर्दक्षिणा[15] श्रोणिरथ्यास्त्री[16] ब्रह्मणो ' ऽवरसक्थं[17] ब्राह्मणाच्छंसिन ' ऊरुः[18] पोतुः ' सव्या श्रोणिर्होतुरवरसक्थं[19] मैत्रावरुणस्योरुरच्छावाकस्य[20] ' दक्षिणा दोर्नेष्टुः '

---

1) Fehlt in C; 2) प्रयुज्यन्ते B; 3) ब्रह्मणो C; 4) य fehlt in C; 5) So corr.; A und C °त्स्वर्यामीति; B °त्स्वर्यां यीति; E °त्स्वर्यामिति; 6) व्याख्यासाम E; 7) °वदानि E; 8) जिह्वे E; 9) कण्ठस्य B; 10) काकुद्रस्य B; 11) श्येन B; 12) So corr.; alle hss. पक्ष; 13) सास° B und E; 14) स: B und E; 15) प्रतिप्रश्यातु° E; 16) ? sic; 17) ऽवरसकथ्यं C; °सक्यं A und C; °सच्छं B; 18) उरू: C; 19) Vgl. 17; 20) So corr.; die hss. °स्योरूरच्छावाकस्य.

सव्या सदस्यस्य' सदं[1] चानूकं च गृहपतेर्जाघनी[2] पत्न्यास्तां[3] सा ब्राह्मणेन प्रतिग्राहयति' वनिष्ठुर्हृदयं वृक्कौ चाङ्गुल्यानि[4] दक्षिणो बाहुराग्नीध्रस्य' सव्य आत्रेयस्य' दक्षिणौ पादौ गृहपतेर्व्रतप्रदस्य[5]' सव्यौ पादौ गृहपत्न्याः व्रतप्रदायाः[6]' सहैवैनयोरोष्ठस्तं गृहपतिरेवानुशिनष्टि[7]' मणिकाश्च[8] स्कन्ध्यास्तिस्रश्च[9] कीकसा ग्रावस्तुतस्तिस्रश्चैव कीकसा अर्धं चापानस्योन्नेतुरंत[10] ऊर्ध्वं चमसाध्वर्यूणां' क्लोमा[11] शमयितुः' शिरः सुब्रह्मण्यस्य' यः श्वःसुत्यामाह्वयते तस्य चर्म' तथा खलु षट्त्रिंशत्संपद्यन्ते[12]' षट्त्रिंशदवदाना गौः' षट्त्रिंशदक्षरा बृहती[13]' बार्हतो वै स्वर्गो लोको' बृहत्या वै[14] देवाः स्वर्गे लोके यजन्ते[15]' बृहत्या[16] स्वर्गे लोके प्रतितिष्ठन्ति[17]' प्रतितिष्ठन्ति[18] प्रजया[19] पशुभिर्य[20] एवं विभजन्ते[21]' ऽथ यदतो ऽन्यथाशीलिको[22] वा पापकृतो वा कुतादो वान्यजना[23]

---

1) सदां B; 2) °जोघनी B; 3) पत्न्यास्था C; 4) Sic; B वाङ्गु°; 5) °पदस्य B; 6) व्रतपदायाः B; 7) So corr.; die hss. haben °रेवानुशास्तिः 8) मणिजाश्च B, C und E; 9) स्कधाश्चि° B; 10) चापानश्चोन्ने° A pr. m.; चापं नेस्यो E; 11) क्रोमा E; 12) °पद्यते C; 13) बृहतिः B; 14) Fehlt in E; 15) यजन्ते A; 16) बृहत्यो C; 17) So corr.; die hss. प्रतिष्ठति; 18) So corr.; die hss. प्रतितिष्ठति; 19) प्रजाया E; 20) य fehlt in A, B und C; 21) विभजात C; 22) °शीलको B; 23) न्यजना C; वान्यत्रजना E.

वा विमथ्नीरन्नेवमेवैषां[1] पशुर्विमथितो भवत्यस्वर्ग्यो' देवभाज्ञो[2] ह वा इमं[3] श्रुतऋषिः पशोर्विभगं विदां चकार' तमु[4] गिरिजाय बाभ्रव्यायान्यो मनुष्येभ्यः[5] प्रोवाच' ततो ऽयमर्वाङ्मनुष्येस्वासीदिति[6] ब्राह्मणम्[7]' ॥ १८ ॥

अथातो दीक्षा' कस्य स्विद्धेतोर्दीक्षित[8] इत्याचक्षते' श्रेष्ठां धियं क्षियतीति[9]' तं वा एतं धीक्षितं सन्तं[10] दीक्षित[11] इत्याचक्षते परोक्षेण' परोक्षप्रिया इव हि देवा भवन्ति प्रत्यक्षद्विषः' कस्य स्विद्धेतोर्दीक्षितो ऽप्रत्युत्थायिको[12] भवत्यनभिवादुकः प्रत्युत्थेयो[13] ऽभिवाद्यो' ये प्रत्युत्थेया[14] अभिवाद्यास्त एनमाविष्टा[15] भवन्त्यथर्वाङ्गिरसस्तस्य किमाथर्वणमिति' यदात्मन्येव[16] जुह्वति न परस्मिन्नेवं ह्याथर्वणानामदनसवानामात्मन्येव जुह्वति न परस्मिन्नथास्य[17] किमाङ्गिरसमिति' यदात्मनश्च[18] परेषां च नामानि[19] न गृह्णात्येवं ह तस्मिन्नासादात्मनश्चैव[20]

---

1) So corr.; die hss. विमथ्नी°; 2) देवता वो C und E; 3) So corr.; die hss. इमां; 4) So corr.; die hss. तामु; 5) मनुष्येभ्य: E; 6) So corr.; die hss. इयम°; 7) ब्रह्मणाम् C; 8) Von दीक्षित bis धीक्षितं fehlt in B; 9) क्षियन्तीति C; क्षयती E; 10) सतं B; 11) दीक्षितं E; 12) So corr.; alle hss. °युको; 13) प्रत्युच्छेयो B; 14) प्रत्युच्छेया B; प्रत्युच्छेयो E; 15) °विष्टा B und C; 16) °त्मनेव E; 17) यस्मिन्° B; 18) °त्मनश्चै B; 19) नाम्यति B; 20) आसाद्? ?.

परेषां[1] च नामानि न गृह्यन्ते[2]' विचक्षणवतीं[3] वाचं भाषन्ते चनसितवतीं' विचक्षयन्ति[4] ब्राह्मणं चनसयन्ति[5] प्राजापत्यं[6]' सैषा व्रतधुगथर्वाङ्गिरसस्तां[7] ह्यन्वायत्ताः[8]' कस्य स्विद्धेतोर्दीक्षितो ऽनाश्यन्नो[9] भवति नास्य नाम गृह्णन्त्यंन्नस्यो[10] नामस्यो[11] भवतीत्याहुस्तस्य ये ऽन्नमदन्ति ते ऽस्य पाप्मानमदन्त्यथास्य[12] ये नाम गृह्णन्ति[13] ते ऽस्य नाम्नः पाप्मानमपाघ्नते' ऽथापि वेदानां गर्भभूतो भवतीत्याहुस्तस्याजातस्याविज्ञातस्याक्रीतसोमस्याभोजनीयं[14] भवतीत्याहुः' स दीक्षाणां प्रातर्जायते सोमं क्रीणन्ति तस्य जातस्य विज्ञातस्य क्रीतसोमस्य[15] भोजनीयं[16] भवतीत्याहुः' कस्य स्विद्धेतोः संसवाः परिजिहीर्षिता[17] भवन्ति[18]' यतरो वीर्यवत्तरो[19] भवति[20] स परस्य यज्ञं[21] परिमुष्णाति[22]' कस्य स्विद्धेतोर्दैवे न ध्यायेत्संस्थिते[23] नाधीयीतेति[24]' संसवस्यैव हेतोरिति' विद्योतमाने स्तनयत्यथो

---

1) परेषा B; 2) गृह्यन्तो A; 3) °वती E; 4) विचक्षयेति E; 5) न च सयन्ति B; 6) प्राजापतिं E; 7) Die hss. ता; 8) ह्यचायता: B; °यन्ता: E; 9) नाश्नान्नो C; 10) गृह्णात्य° C und E; 11) नामस्यो E; 12) °थास्या A; 13) गृह्णाति E; 14) °सोमस्यभजनीयं E; 15) क्रीतसोम E; 16) भोजनी E; 17) °हीर्षता C; 18) भवति C; 19) विर्यवत्तमो C; 20) भव B; भवती E; 21) यज्ञ E; 22) परिमुष्णाति B; 23) ध्याये संस्थिते C; धाये संस्थिते B; 24) नाधीयैतेति C; नाधीयीतैति B.

वर्षति वायव्यमभिषुण्वन्ति वै देवाः सोमं[1] च भक्षयन्ति । तदभिषुण्वन्ति ब्राह्मणाः शुश्रुवांसो[2] ऽनूचानास्तेषां सर्वरसभक्षाः पितृपितामहा भवन्ति । स दैवे न ध्यायेत्संस्थिते[3] नाधीयीतेति[4] ब्राह्मणम् । ॥ १९ ॥

समावृत्ता[5] आचार्या निषेदुस्तान्ह यज्ञो दीक्षिष्यमाणान्ब्राह्मणाद्रूपं[6] कृत्वोपोदियायेत्थं[7] चेद्वो ऽयसमवत्सुर्हन्त[8] वो ऽहं मध्ये दिक्षा इति । त ऊचुर्नैव[9] त्वा विद्म न जानीमः[10] । को हीदविज्ञायमानेन[11] सह दीक्षिष्यतीति[12] । यन्विदं दीक्षिष्यध्वे भूयो न दीक्षिष्यध्वे । ऽथ वा उ एकं दीक्षयिष्यथ[13] सं वै तर्हि मोहिष्यथ । मोहिष्यति[14] वो यज्ञः । सर्वे ते दीक्षयिष्ययेत्यथ[15] वा उ एकं[16] दीक्षयिष्यथ ते वा अहीनर्त्विजो गृहपतयो भविष्यथ[17] । ते तूष्णीं[18] ध्यायन्त[19] आसां चक्रिरे । स होवाच । किं नु तूष्णीमाध्वे । भूयो वः पृच्छामः । पृच्छतेति[20] । यन्विदं दीक्षिष्यध्व[21] उपमये[22] एतस्मिन्संवत्सरे मिथुनं

1) सोम E; 2) सुश्रु° A und E; श्रुश्रु° B; 3) ध्याये सं° B und C; 4) न धीयीतेति A pr. m.; नाधीयैतेति C; 5) समावृत्त C; 6) So corr.; die hss. दीक्षिष्यमाणानां ब्रा°; 7) °येच्छां B; 8) समवत्सु: ? ?; 9) ऊचुर्वैव A; 10) जनिमा B; 11) ह्रीदवि° B; 12) °ष्यसीति A und B; 13) दीयिष्य B; दीक्षयीष्यथ E; 14) °ष्यती C; 15) दीक्षियिष्यतेत्यथ C; 16) एक B; 17) भविष्य B; 18) तष्णी B; 19) धायन्त B; 20) पृच्छयेति E; 21) °ष्यध E; 22) ? ? B. Ind. उपयेम.

चरिष्यथ नोपैष्यथेति। धिगिति होचुः। कथं नु दीक्षिता उपैष्यामो नोपैष्यामहा इति। ते वै ब्राह्मणानामभिमन्तारो[1] भविष्यथ[2]। रेतो ह वो य एतस्मिन्संवत्सरे ब्राह्मणास्तदभविष्यंस्ते[3] बोधिमता भविष्यथेत्यथ[4] वा उपैष्यामो नोपैष्यामहा इति। ते वै दीक्षिता अवकीर्णिनो भविष्यथ। न ह वै देवयानः[5] पन्था प्रादुर्भविष्यतीति। तिरो वै[6] देवयानः पन्था भविष्यतीति। ते वयं भगवन्तमेवोपधावाम यथा स्वस्ति संवत्सरस्योदृचं समश्नवामहा इति ब्राह्मणम्। ॥ २० ॥

स होवाच द्वादश ह वै वसूनि दीक्षितादुत्क्रामन्ति[7]। न ह वै दीक्षितो ऽग्निहोत्रं जुहुयान्न पौर्णमासेन[8] यज्ञेन यजेत। नामावास्येनास्मिन्वसीत। न पितृयज्ञेन यजेत[9]। न तत्र गच्छेद्यत्र मनसा जिगमिषेन्नेष्ट्या यजेत। न वाचा यथाकथाचिदभिभाषेत[10]। न मिथुनं चरेन्नान्नस्य[11] यथाकाममुपयुञ्जीत। न पशुबन्धेन यज्ञेन यजेत। न तत्र गच्छेद्यत्र चक्षुषा परापश्येत्कृष्णाजिनं वसीत। कुरीरं धारयेन्मुंष्टी[12] कुर्यादङ्गुष्ठप्रभृतयस्तिस्र उच्छ्रयेन्मृगशृङ्ग

1) °भिमन्दारा A und B; 2) भविष्यत E; 3) °भविष्यन्ति ते E; 4) भविष्यतेत्यथ E; 5) देवायानः C; 6) वो C; 7) दीक्षिता उत्क्रा° E; 8) पूर्णा° C; 9) यजेत A; 10) °विभाषेत C; 11) So corr.; die hss. °चरेन्नान्यस्य; 12) धारयन्मुष्टी E.

गृह्णीयात्तेन कर्षेतांथ यस्य दीक्षितस्य वाग्वायता स्यान्मुष्टी वा विसृष्टौ[1] स एतानि जपेत् ' ॥ २१ ॥

अग्निहोत्रं च मा पौर्णमासश्च यज्ञः पुरस्तात्प्रत्यञ्चमुभौ कामप्रौ भूत्वाक्षित्या सहाविशतां[2] ' वसतिश्च मामावास्यश्च यज्ञः पश्चात्प्राञ्चमुभाविति[3] समानं ' मनश्च मा पितृयज्ञश्च यज्ञो दक्षिणात उदञ्चमुभाविति समानं ' वाक्च मेष्टिश्चोत्तरतो दक्षिणाञ्चमुभाविति समानं ' रेतश्च मान्नं चेत ऊर्ध्वमुभाविति समानं ' चक्षुश्च मा पशुबन्धश्च यज्ञो[4] ऽमुतो ऽर्वाञ्चमुभौ कामप्रौ भूत्वाक्षित्या[5] सहाविशतामिति[6] खलु ह वै दीक्षितो य आत्मनि वसूनि धत्ते न चैवास्य का चनार्तिर्भवति न च यज्ञविष्कन्धमुपयात्यपहन्ति[7] पुनर्मृत्युमंपात्येति[8] पुनराजातिं[9] ' कामचारो ऽस्य सर्वेषु लोकेषु भाति य एवं वेद यश्चैवंविद्वान्दीक्षामुपैतीति ब्राह्मणम् ' ॥ २२ ॥

अथ यस्य[10] दीक्षितस्यर्तुमती जाया स्यात्प्रतिस्नावा[11] प्रतिस्नावा[12] सरूपवत्साया[13] गोः[14] पयसि स्थालीपाकं

---

1) वसृष्टौ A pr. m. und E; 2) माहाविशता B; 3) In A findet man das ganze yajus; 4) यज्ञो C; 5) °क्षित्य E; 6) ? fehlt etwas; 7) यत्तविस्कन्ध° B; 8) So alle hss. °मत्येति wäre besser; 9) °जार्ति B; °जात्यं C; 10) ऽग्नस्य B; 11) ? ? B स्यात्यस्यात्प्रतिस्नावा; 12) ? ?; 13) सारूप° A sec. m. und E; 14) गां: B.

अपयित्वाभिघार्येद्धास्योद्धृत्याभिहिंकृत्य गर्भवेदनपुंसवनैः संपातवन्तं[1] कृत्वा तं परैव प्राश्नीयाद्दीक्षितो वा अन्नं[2] ' वृषा हिंकार ' एवं ह्यीश्वरा या[3] दीक्षिताय[4] दीक्षिता[5] जाया पुत्रं लभेतेत्येतेनैव[6] प्रक्रमेण[7] यजेतेति ब्राह्मणम् ' ॥ २३ ॥

॥ इत्यथर्ववेदे गोपथब्राह्मणपूर्वभागे तृतीयः प्रपाठकः ॥

---

ओमयं[4] वै यज्ञो यो ऽयं पवते ' तमेत ईप्सन्ति ये संवत्सराय दीक्षन्ते[8] ' तेषां गृहपतिः प्रथमो दीक्षते ' ऽयं वै लोको गृहपतिरस्मिन्वा इदं सर्वं लोके प्रतिष्ठितं ' गृहपता उ एव सर्वे[4] सत्त्रिणः प्रतिष्ठिताः ' प्रतिष्ठाया[9] एवैनं[9] तत्प्रतिष्ठित्यै[9] दीक्षन्ते[10] ' ॥ १ ॥

अथ ब्रह्माणं[11] दीक्षयति ' चन्द्रमा वै ब्रह्माधिदैवं मनो ऽध्यात्मं ' मनसैव तदोषधीः[12] संदधाति ' तथा[13] ओषधीर्विद स एव ब्रह्मौषधीस्तदनेन लोकेन[4] संदधाति ' तस्मादेतावन्तरेणान्यो न दीक्षित[14] ' स यदेतावन्तरेणान्यो

---

1) °तवन्त E; 2) यन्नु C; 3) So corr.; die hss. य; 4) Fehlt in E; 5) So corr. die hss. °ती; 6) °त्येतेनैव E; 7) प्रक्रम्येण E; 8) दीक्षन्तो E; 9) ? ? 10) दीक्ष्यन्ते E; 11) ब्राह्मणां C; 12) तदोषधी: C; 13) तथ E; 14) दीक्षत B.

दीक्षेतेमं तं लोकमोषधिभिर्व्यापादयेदुच्छोषुका[1] ह[2] स्युस्तस्मादेतावत्तरेणान्यो न दीक्षेत' ॥ २ ॥

अथोद्गातारं दीक्षयत्यादित्यो[3] वा उद्गाताधिदैवं चक्षुरध्यात्मं 'पर्जन्य[4] आदित्यः[4] 'पर्जन्यादधि वृष्टिर्जायते' वृष्टिरेव[5] तदोषधीः[5] संदधाति[5] 'तस्मादेतावत्तरेणान्यो न दीक्षेत' स यदेतावत्तरेणान्यो दीक्षेतेमं तं लोकं वर्षेण व्यापादयेदवर्षुका[6] ह स्युस्तस्मादेतावत्तरेणान्यो[7] न दीक्षेत' ॥ ३ ॥

अथ होतारं दीक्षयत्यग्निर्वै होताधिदैवं वागध्यात्ममन्नं वृष्टिर्वाचं[8] चैव तदग्निं चान्नेन संदधाति' तस्मादेतावत्तरेणान्यो न दीक्षेत' स[9] यदेतावत्तरेणान्यो दीक्षेतेमं तं लोकमन्नेन व्यापादयेदशनायुका ह स्युस्तस्मादेतावत्तरेणान्यो न दीक्षेत' ॥ ४ ॥

अथाध्वर्यु[10] प्रतिप्रस्थाता दीक्षयति' वायुर्वा अध्वर्युरधिदैवं प्राणो ऽध्यात्ममन्नं वृष्टिर्वायुं[11] चैव[12] तत्प्राणं चान्नेन संदधाति' तस्मादेतवत्तरेणान्यो न दीक्षेत' स

---

1) °व्यादयेदुछो° B; 2) E fügt वा ein; 3) °दीत्यो E; 4) Corrupt; 5) Corrupt; man erwartet वृष्टिं तदोषधिभ्यः संदधाति; 6) °वर्षुका B; 7) स्युस्तस्मादेतात्व° B; 8) °र्वाच E; 9) Von स bis I 4. 5 fehlt in E; 10) °ध्वर्यु E; 11) °र्वायु C und E; 12) चैवं C.

यदेतावन्तरेणान्यो दीक्षेतेमं तं लोकं प्राणेन व्यापादये-
त्प्रमायुका[1] ह स्युस्तस्मादेतावन्तरेणान्यो[2] न दीक्षेत '
॥ ५ ॥

अथ ब्रह्मणे ब्राह्मणाच्छंसिनं दीक्षयत्यथोद्गात्रे प्रस्तो-
तारं दीक्षयत्यथ[3] होत्रे मैत्रावरुणं दीक्षयत्यथाध्वर्यवे
प्रतिप्रस्थातारं[4] नेष्टा दीक्षयति ' स ह्येनमन्वेतेषां[5] वै
नवानां कॢप्तिमन्वितरे[6] कल्पन्ते ' नव वै प्राणाः ' प्रा-
णैर्यज्ञस्तायते[7] ' ऽथ ब्रह्मणे पोतारं दीक्षयत्यथोद्गात्रे[8]
प्रतिहर्तारं दीक्षयत्यथ होत्रे ऽच्छावाकं दीक्षयत्यथाध्वर्यवे
नेष्टारमुन्नेता दीक्षयति ' स ह्येनमन्वथ ब्रह्मण आग्नीध्रं
दीक्षयत्यथोद्गात्रे सुब्रह्मण्यं दीक्षयत्यथ होत्रे ग्रावस्तुतं
दीक्षयत्यथ[9] तमन्यः स्नातको वा ब्रह्मचारी वा दीक्षयति '
न पूतः[10] पावयेदित्याहुः ' सैषानुपूर्वं[11] दीक्षा[12] ' तद्य
एवं दीक्षन्ते दीक्षिष्यमाणा[13] एव[14] ते[14] सत्त्रिणां प्रा-
यश्चित्तं न विन्दन्ते[15] ' सत्त्रिणां प्रायश्चित्तमनु तस्यार्धस्य

1) व्यापद° A und C; 2) स्युस्तस्मादेताव° B; 3) °त्यथा A pr. m.; °त्यथो C; 4) So corr.; die hss. प्रतिस्थातारं; E प्रतिस्थातरं; 5) So corr.; die hss. °न्वितरेषां; 6) So corr. die hss. कॢप्तिरन्यतरे; 7) °स्ता-यात B; 8) °थोद्गायत्रे B; 9) °त्यथा C; 10) पुनः A; पुतः C; 11) सेषानुपूर्व्वं B; °पूर्व्वं C; 12) दीक्षते C; 13) दक्षिष्य° A pr. m.; 14) एवमेते C; 15) विंदंते A; विंदंते C.

योगक्षेमः कल्पते यस्मिन्नर्धे दीक्षन्त इति ब्राह्मणम् ॥ ६ ॥

श्रद्धाया वै देवा दीक्षणीयां[1] निरमिमतादितेः प्रायणीयां[2] सोमात्क्रयं[3] विष्णोरातिथ्यमादित्यात्प्रवर्ग्यं[4] स्वधाया उपसदो ऽग्नीषोमाभ्यामौपवसथ्यमह्नः[5] प्रातर्यावभ्यो देवेभ्यः प्रातरनुवाकं वसुभ्यः प्रातःसवनं रुद्रेभ्यो माध्यंदिनं सवनमादित्येभ्यस्तृतीयसवनं वरुणादवभृथमदितेरुदयनीयां[6] मित्रावरुणाभ्यामनूबन्ध्यां[7] त्वष्टुस्त्वाष्ट्रं देवीभ्यो देविकाभ्यो[8] देवताहवींषि[9] कामाद्दशातिरात्रं[10] स्वर्गाल्लोकादुदवसानीयां तद्वा एतदग्निष्टोमस्य जन्म स य एवमेतदग्निष्टोमस्य जन्म वेदाग्निष्टोमेन[11] सात्मा[12] सलोको[13] भूत्वा देवानप्येतीति[14] ब्राह्मणम् ॥ ७ ॥

अथ यद्दीक्षणीयया[15] यजन्ते श्रद्धामेव तद्देवीं[16] देवतां यजन्ते श्रद्धा देवी[17] देवता[18] भवन्ति[19] श्रद्धाया

---

1) देक्षिणीया E; दीक्षीयां B; 2) आयणीयां C; 3) सोमात्क्रम्यं B; 4) °त्प्रवर्ग्यं B; 5) °थ्यमः E; 6) °नीयं E; 7) °बध्यां B; °बन्ध्यं C; 8) देकाभ्यो B; देववाकाभ्यो E; 9) Man erwartet देविकाहवींषि; 10) Wahrscheinlich कामादतिरात्रं; 11) देवाग्नि° E; 12) Die hss. स आत्मा; 13) सलोका E; 14) देवानपीतीति E; 15) यस्य दीक्षिणी° B; 16) तद्देवी A und B; तद्देवो E; 17) Fehlt in B; देव E; 18) देवताय B; 19) भवति A, C und E.

देव्याः सायुज्यं सलोकतां यन्ति य एतदुपयन्त्यंथ[1] यत्प्रा-
यणीयया[2] यजन्ते ऽदितिमेव तद्देवीं देवतां यजन्ते ऽदि-
तिर्देवी देवता भवन्त्यदित्या[3] देव्याः[4] सायुज्यं[5] सलो-
कतां यन्ति य एतदुपयन्त्यंथ[6] यत्क्रयमुपयन्ति सोममेव
तद्देवं[4] देवतां यजन्ते सोमो देवो दवता भवन्ति सोमस्य
देवस्य[4] सायुज्यं सलोकतां यन्ति य एतदुपयन्त्यंथ[7]
यदातिथ्यया यजन्ते विष्णुमेव तद्देवं[8] देवतां[8] यजन्ते
विष्णुर्देवो देवता भवन्ति[9] विष्णोर्देवस्य सायुज्यं सलो-
कतां यन्ति[10] य[11] एतदुपयन्त्यंथ[11] यत्प्रवर्ग्यमुपयन्त्या-
दित्यमेव तद्देवं[12] दवतां यजन्त आदित्यो देवो देवता
भवन्त्यादित्यस्य[13] देवस्य सायुज्यं सलोकतां यन्ति य
एतदुपयन्त्यंथ[14] यदुपसदमुपयन्ति[15] स्वधामेव तद्देवीं[16]
देवतां यजन्ते स्वधा देवी देवता भवन्ति[17] स्वधाया
देव्याः सायुज्यं[18] सलोकतां यन्ति य एतदुपयन्त्यंथ[19]
यदौपवसथ्यमहरुपयन्त्यग्नीषोमावेव तद्देवौ देवते यजन्ते[20]

1) एतदुभय° B; 2) यत्प्रायणीया B; 3) भवन्त्यदित्य A, C und E; 4) Fehlt in B; 5) सायुज्य B; 6) एत उपय° B; 7) एतदुभ° B; 8) तद्देवतां B; 9) भवति A, C und E; 10) यन्ति B; 11) यदात उप° B; 12) देवं fehlt in B; 13) Alle hss. haben भवन्त्यादि°; 14) एतदुभ° B; 15) य उपस° B; 16) तद्देवी B; 17) भवति B; 18) सायुज्य B; 19) एतमुप° B; 20) यजतो A, C und E; यजन्तो B.

ऽग्नीषोमौ देवौ देवते भवन्ति ' ऽग्नीषोमयोर्देवतयोः[1] सा-
युज्यं सलोकतां यन्ति य एतदुपयन्त्यथ यत्प्रातरनुवा-
कमुपयन्ति प्रातर्यावाण एव तद्देवान्देवता[2] यजन्ते ' प्रा-
तर्यावाणो देवा देवता भवन्ति[3] ' प्रातर्यावाणां देवानां
सायुज्यं सलोकतां यन्ति य एतदुपयन्त्यथ यत्प्रातःसवन-
मुपयन्ति वसूनेव तद्देवान्देवता[4] यजन्ते ' वसवो देवा
देवता भवन्ति ' वसूनां देवानां सायुज्यं सलोकतां यन्ति
य एतदुपयन्त्यथ यन्माध्यंदिनं सवनमुपयन्ति रुद्रानेव तद्दे-
वान्देवता यजन्ते ' रुद्रा देवा देवता भवन्ति ' रुद्राणां
देवानां सायुज्यं सलोकतां यन्ति य एतदुपयन्त्यथ यत्तृ-
तीयसवनमुपयन्त्यादित्यानेव तद्देवान्देवता[5] यजन्त ' आ-
दित्या देवा[6] देवता भवन्त्यादित्यानां देवानां सायुज्यं
सलोकतां यन्ति य एतदुपयन्त्यथ यदवभृथमुपयन्ति[7]
वरुणमेव तद्देवं देवतां[8] यजन्ते ' वरुणो देवो देवता
भवन्ति[9] ' वरुणस्य देवस्य सायुज्यं सलोकतां यन्ति य
एतदुपयन्त्यथ यदुदयनीयया यजन्ते ऽदितिमेव तद्देवीं
देवतां यजन्ते ' ऽदितिर्देवी देवता भवन्त्यादित्या[10] देव्याः

1) °र्देवयोः B und C; 2) °न्देवतां C und E; 3) भवति C und E; 4) °न्देवतां A pr. m., B und C; 5) °न्देवतां A und B; 6) Fehlt in E; 7) Von उप° bis यदुदयनीयया fehlt in B; 8) देवता E; 9) भवति A, B und C; 10) °दित्य E.

सायुज्यं सलोकतां यन्ति य एतदुपयन्त्यथ यदनूबन्ध्यया[1] यजन्ते मित्रावरुणावेव तद्देवौ देवते यजन्ते[2] ' मित्रावरुणौ देवौ देवते भवन्ति[3] ' मित्रावरुणयोर्देवयोः सायुज्यं सलोकतां यन्ति य एतदुपयन्त्यथ[4] यत्त्वाष्ट्रेण[5] पशुना यजन्ते त्वष्टारमेव[6] तद्देवं देवतां यजन्ते ' त्वष्टा देवो देवता भवन्ति ' त्वष्टुर्देवस्य सायुज्यं सलोकतां यन्ति य एतदुपयन्त्यथ यद्देविकाहविर्भिश्चरन्ति या एता उपसत्सु[7] भवन्त्यग्निः[8] सोमो विष्णुरिति देव्यो देविका देवता भवन्ति[9] ' देवीनां देविकानां[10] देवतानां सायुज्यं सलोकतां यन्ति य एतदुपयन्त्यथ यद्दशातिरात्रमुपयन्ति[11] काममेव तद्देवं देवतां यजन्ते ' कामो देवो देवता भवन्ति ' कामस्य देवस्य सायुज्यं सलोकतां यन्ति य एतदुपयन्त्यथ यदुदवसानीयया यजन्ते स्वर्गमेव[12] तल्लोकं देवं देवतां यजन्ते ' स्वर्गो लोको देवो देवता भवन्ति ' स्वर्गस्य लोकस्य देवस्य सायुज्यं सलोकतां यन्ति य एतदुपयन्ति ' तद्वा एतदग्निष्टोमस्य जन्म ' स य एवमेतदग्निष्टोमस्य[13] जन्म वेदात्त्वैव[14]

---

1) °बन्धयाय B und C; 2) So corr.; alle hss. यजन्तो; 3) So corr.; alle hss. भवन्तो:; 4) °यन्त्यथ B und E; 5) यत्त्वाष्ट्रेण A; 6) त्वा-ष्टारमेव B; 7) So corr.; die hss. उपसत्सु:; 8) भवन्त्यग्नि: A pr. man. und C; 9) भवन्ति B; 10) देवीकानां E; 11) ? wschl. यद्दशातिरा-त्रमुपयन्ति vgl. I 4. 7; 12) स्वर्गमेवं B; 13) एवमेव तदग्नि° E; 14) वेदो त्वैव E; वेदात्वैव C.

तदग्निष्टोमं स्वर्गे[1] लोके[1] प्रतितिष्ठति[2] ' प्रतितिष्ठति[3] प्रजया पशुभिर्य एवं वेदाग्निष्टोमेन सात्मा[4] सलोको भूत्वा देवानप्येतीति ब्राह्मणम् ' ॥ ८ ॥

अहोरात्राभ्यां वै देवाः प्रायणीयमतिरात्रं[5] निरमिमतार्धमासेभ्यश्चतुर्विंशमहर्ब्रह्मणो[6] ऽभिप्लवं ' क्षत्रात्पृष्ठ्यमंग्रैरभिजितमह्नः[7] स्वरसाम्नः[8] ' सूर्याद्विषुवन्तमुक्ता आवृत्ताः स्वरसामान ' इन्द्राद्विश्वजितमुक्तौ पृष्ठ्याभिप्लवौ ' मित्रावरुणाभ्यां गवायुषी ' विश्वेभ्यो देवेभ्यो दशरात्रं[9] ' दिग्भ्यो दाशरात्रिकं[10] पृष्ठ्यं[11] षडहमेभ्यो लोकेभ्यश्छन्दोमं[12] त्र्यहं[13] ' संवत्सराद्दशममहः ' प्रजापतेर्महाव्रतं ' स्वर्गाल्लोकादुदयनीयमतिरात्रं[14] ' तद्वा एतत्संवत्सरस्य जन्म ' स य एवमेतत्संवत्सरस्य[15] जन्म वेद संवत्सरेण[16] सात्मा[17] सलोको भूत्वा देवानप्येतीति[18] ब्राह्मणम् ' ॥ ९ ॥

अथ यत्प्रायणीयमतिरात्रमुपयन्त्यहोरात्रावेव तद्देवौ

---

1) स्वलोक B; स्वर्गं लोके E; 2) So corr.; die hss. प्रतिष्ठति; 3) प्रतिष्ठति B; fehlt in C; 4) स आत्मा A, B und E; 5) °रात्र E; 6) C निरमिमताधना°, E °श्चतुर्विंशतिमहद्ब्रह्मणो; 7) क्षत्रात्पृष्ठ्याम° E; 8) So corr.; die hss. स्वरसामानः; 9) दशरात्र E; 10) दशरात्रकं E; 11) पृष्ठ्यः B; 12) °श्छन्दाम A, B und E; 13) त्रहं E; 14) स्वर्गोल्लोकदु° C; 15) एवमेवतास्य° C; 16) °त्सरेणा A; 17) स आत्मा A sec. m.; स ब्रत्मा B; 18) देवमप्येतीति B.

देवते यजन्ते[1] ऽहोरात्रौ देवौ देवते भवन्ति[2] ऽहोरात्रयोर्देवयोः सायुज्यं सलोकतां यन्ति य एतदुपयन्त्यथ यच्चतुर्विंशमहरुपयन्त्यर्धमासानेव[3] तद्देवान्देवता[4] यजन्ते ऽर्धमासा देवा देवता भवन्त्यर्धमासानां देवानां[5] सायुज्यं सलोकतां यन्ति य एतदुपयन्त्यथ यदभिप्लवमुपयन्ति ब्रह्माणमेव[6] तद्देवं देवतां यजन्ते ब्रह्मा देवो देवता भवन्ति[7] ब्रह्मणो देवस्य सायुज्यं सलोकतां यन्ति य एतदुपयन्त्यथ यत्पृष्ठ्यमुपयन्ति क्षत्रमेव तद्देवं देवतां यजन्ते क्षत्रं देवो[8] देवता भवन्ति[9] क्षत्रस्य[10] देवस्य सायुज्यं सलोकतां यन्ति य एतदुपयन्त्यथ यदभिजितमुपयन्त्यग्निमेव[11] तद्देवं देवतां यजन्ते ऽग्निर्देवो देवता भवन्त्यग्नेर्देवस्य[12] सायुज्यं सलोकतां यन्ति य एतदुपयन्त्यथ यत्स्वरसाम्न[13] उपयन्त्येव तद्देवीर्देवता[14] यजन्त आपो देव्यो देवता भवन्त्यपां देवीनां सायुज्यं सलोकतां यन्ति य एतदुपयन्त्यथ यद्विषुवन्तमुपयन्ति सूर्यमेव तद्देवं देवतां

---

1) Alle hss. यजतो; 2) Alle hss. भवतो; 3) °हरुपय° C und E; 4) °न्देवतां A pr. m.; B und C; 5) देवतानां E; 6) ब्राह्म व C; 7) भवति A, C und E; 8) Fehlt in B; 9) So corr.; alle hss. भवति; 10) क्षत्र E; 11) Von यदभि° bis यत्स्वर° fehlt in E; 12) So corr.; alle hss. भवन्त्य°; 13) °रसाम्न E; 14) °र्देवतो A; तद्देवीं देवतां C; °र्देवतां E.

यजन्ते ' सूर्यो देवो देवता भवन्ति[1] ' सूर्यस्य देवस्य सायुज्यं सलोकतां यन्ति[2] य एतदुपयन्त्युक्ता ग्रावृत्ताः स्वरसामानो ' ऽथ यद्विश्वजितमुपयन्तीन्द्रमेव[3] तद्देवं देवतां यजन्त ' इन्द्रो देवो देवता भवन्तीन्द्रस्य[4] देवस्य सायुज्यं सलोकतां यन्ति य एतदुपयन्त्युक्तौ पृष्ठ्याभिप्लवावथ यदवायुषी उपयन्ति मित्रावरुणावेव तद्देवौ देवते यजन्ते[5] ' मित्रावरुणौ देवौ[6] देवते[7] भवन्ति[8] ' मित्रावरुणयोर्देवयोः सायुज्यं सलोकतां यन्ति य एतदुपयन्त्यथ यद्दशरात्रमुपयन्ति विश्वानेव तद्देवान्देवता[9] यजन्ते ' विश्वे देवा देवता[10] भवन्ति ' विश्वेषां देवानां सायुज्यं सलोकतां यन्ति य एतदुपयन्त्यथ यद्दाशरात्रिकं पृष्ठ्यं[11] षडहमुपयन्ति दिश एव तद्देवीर्देवता[12] यजन्ते ' दिशो देव्यो[13] देवता भवन्ति ' दिशां देवीनां सायुज्यं सलोकतां यन्ति[14] य एतदुपयन्त्यथ यच्छन्दोमं त्र्यहमुपयन्तीमानेव तल्लोकान्देवान्देवता[15] यजन्त ' इमे लोका देवा देवता भवन्त्येषां लोकानां देवानां[16] सायुज्यं सलोकतां यन्ति य एतदु-

---

1) Alle hss. भवन्ति; 2) यन्ति A; 3) °यन्तीन्द्रमेव B; 4) भवन्ती° A, B und C; 5) So corr.; die hss. यजन्तो; 6) Fehlt in A; 7) देते A; 8) Die hss. भवन्तो; 9) Die hss. °न्देवतां; 10) देवतां B; 11) पृष्ठ्यः B; 12) तद्देव्यौ देवतां B; °न्देवतां C; 13) Fehlt in E; 14) यन्ति A; 15) °वतां C und E; 16) Fehlt in B.

पयन्त्यथ[1] यद्दशममहरुपयन्ति[2] संवत्सरमेव तद्देवं देवतां[3] यजन्ते' संवत्सरो देवो देवता भवन्ति[4]' संवत्सरस्य देवस्य सायुज्यं सलोकतां यन्ति य एतदुपयन्त्यथ यन्महाव्रतमुपयन्ति[5] प्रजापतिमेव[5] तद्देवं[5] देवतां[6] यजन्ते' प्रजापतिर्देवो देवता भवन्ति[7]' प्रजापतेर्देवस्य सायुज्यं सलोकतां यन्ति य एतदुपयन्त्यथ यदुदयनीयमतिरात्रमुपयन्ति स्वर्गमेव[8] तल्लोकं देवं देवतां यजन्ते' स्वर्गो लोको[9] देवो देवता भवन्ति[10]' स्वर्गस्य लोकस्य देवस्य सायुज्यं सलोकतां यन्ति य एतदुपयन्ति' तद्वा एतत्संवत्सरस्य जन्म' स य[11] एवमेतत्संवत्सरस्य जन्म वेदात्वेव[12] तत्संवत्सरं[13] स्वर्गे लोके प्रतितिष्ठति[14]' प्रतितिष्ठति[15] प्रजया पशुभिर्य एवं[16] वेद' संवत्सरेण सात्मा[17] सलोको भूत्वा देवानप्येतीति ब्राह्मणम्' ॥ १० ॥

स वा एष संवत्सरो ऽधिदैवं[18] चाध्यात्मं च प्रतिष्ठितः' स य एवमेतत्संवत्सरमधिदैवं[19] चाध्यात्मं च

---

1) एतदुपयन्त्यत्र C; 2) °महरुपयन्ति C und E; 3) देवतं E; 4) Die hss. भवति; 5) Fehlt in E; 6) Fehlt in E; B hat देवानां; 7) Die hss. भवति; 8) स्वर्गमेवं B; 9) लोके E; 10) Die hss. भवति; 11) Fehlt in C; 12) वेदात्वैव E; 13) °त्सर E; 14) So corr.; die hss. प्रतिष्ठति; 15) तिष्ठति B; 16) एव E; 17) स आत्मा A und B; 18) °दैव E; 19) एवमेतं सं° C und E.

प्रतिष्ठितं वेद प्रतितिष्ठति[1] ' प्रतितिष्ठति[2] प्रजया पशुभिर्य एवं वेद[3] ' ॥ ११ ॥

स वा एष संवत्सरो बृहतीमभिसंपन्नो ' द्वावक्षरावक्षां[4] षडह्नौ[5] द्वौ पृष्ठ्याभिप्लवौ[6] ' गवायुषी दशरात्रस्तथा खलु षट्त्रिंशत्संपद्यन्ते[7] ' षट्त्रिंशदक्षरानाका[8] गौः[8] ' षट्त्रिंशदक्षरा बृहती ' बार्हतो वै स्वर्गो लोको ' बृहत्या वै देवाः स्वर्गे लोके यजन्ते ' बृहत्या स्वर्गे लोके प्रतितिष्ठति[1] ' प्रतितिष्ठति[2] प्रजया पशुभिर्य एवं वेद ' ॥ १२ ॥

स वा एष संवत्सरस्त्रिमहाव्रतश्चतुर्विंशे[9] महाव्रतं विषुवति महाव्रतं महाव्रत एव महाव्रतं ' तं ह स्मैतमेवं विद्वांसः पूर्वे त्रिमहाव्रतमुपयन्ति[10] ' ते तेजस्विन आसंत्सत्यवादिनः संशितव्रता[11] ' य एनमद्य तथोपेयुर्यथामपात्रमुदक आसिक्तं[12] निर्मृत्येदेवं[13] यजमाना निर्मृत्येरनुपर्युपयन्ति[13] ' तथा हास्य सत्येन तपसा व्रतेन चाभिजितमवरुद्धं[14] भवति य एवं वेद ' ॥ १३ ॥

---

1) So corr.; die hss. प्रतिष्ठति; 2) Fehlt in B; 3) Die hss. स वा एष संवत्सर in dieser und in sieben folgenden kaṇḍika's; 4) द्वादशाक्षरा° C und E; 5) षडहो B; षड्ह्नो C; 6) पृष्ठ्यभि° A pr. m.; 7) °पद्यते E; 8) Fehlt in E; 9) So corr.; alle hss. °विंशेन; 10) °यन्ते E; von °पयन्ति bis पात्रम् fehlt in B; 11) शंसितव्रता A und C; 12) आसिके A; आशिसिक्ते C; 13) So corr.; die hss. निर्मृत्ये°; 14) याभिजि° C.

अथ यच्चतुर्विंशमहरुपेत्यानुपेत्य विषुवन्तं महाव्रतमुपेयात्कथमनागूर्त्यै[1] भवतीति ' यमेवामुं पुरस्ताद्विषुवतो ऽतिरात्रमुपयन्ति तेनेति ब्रूयादभिप्लवात्पृष्ठ्यो निर्मितः ' पृष्ठ्यादभिजिदभिजितः स्वरसामानः ' स्वरसामभ्यो विषुवान्विषुवतः[2] स्वरसामानः ' स्वरसामभ्यो विश्वजिद्विश्वजितः पृष्ठ्याभिप्लवौ ' पृष्ठ्याभिप्लवाभ्यां गवायुषी ' गवायुर्भ्यां[3] दशरात्रः[4] ' दशरात्रान्महाव्रतं[5] ' महाव्रतादुदयनीयो[6] ऽतिरात्र[7] ' उदयनीयो[7] ऽतिरात्रः स्वर्गाय लोकायान्नाद्याय प्रतिष्ठित्यै ' ॥ १४ ॥

अथ यच्चतुर्विंशमहरुपेत्यानुपेत्य[8] विषुवन्तं महाव्रतमुपेयात्कथमनागूर्त्यै[9] भवतीति ' यमेवामुं[10] पुरस्ताद्विषुवतो ऽतिरात्रमुपयन्ति[11] तेनेति ब्रूयादभिप्लवात्पृष्ठ्यो निर्मितः ' पृष्ठ्यादभिजिदभिजितः[12] स्वरसामानः ' स्वरसामभ्यो विषवान्विषुवतः[13] स्वरसामानः ' स्वरसामभ्यो विश्वजिद्विश्वजितः पृष्ठ्याभिप्लवौ[14] ' पृष्ठ्याभिप्लवाभ्यां गवायुषी '

---

1) So corr.; die hss. °नाकूर्त्यै; 2) Von विषुवान्वि° bis पृष्ठ्या° fehlt in B; 3) गवायुर्भ्यां B; 4) Fehlt in B; 5) So corr.; die hss. दशरात्राय महाव्रतं; E °व्रत; 6) °दयनीयाया A und B; 7) ऽतिरात्रायोदनीयो A und B; 8) °त्यानुपेत्य B; 9) So corr.; die hss. °नाकूर्त्यै; 10) यमेवामु C; 11) ऽतित्रिरात्र° A; त्रिरात्र° E; 12) अभिजित् fehlt in B und E; 13) °षवन्तः E; 14) °भिप्लौ E.

गवायुभ्यां दशरात्रो[1] 'ऽथ ह देवेभ्यो महाव्रतं न[2] तस्थे कथमूर्ध्वै[3] स्तोमैर्विषुवन्तमुपागातावृत्तैर्मामिति[4] 'ते देवा इहसामिवामुरूंय[5] तं यज्ञक्रतुं[6] जानीमो[7] य ऊर्ध्वस्तोमो[8] येनैतदहरवाप्नुयामेति' तत[9] एतं द्वादशरात्रमूर्ध्वस्तोमं ददृशुस्तमाहरंस्तेनायजन्त' तत एभ्यो ऽतिष्ठंस्तिष्ठति[10] ह्यस्मै महाव्रतं' प्रतितिष्ठति[11]', प्रतितिष्ठति प्रजया पशुभिर्य एवं वेद' ॥ १५ ॥

अथ यच्चतुर्विंशमहरुपेत्यानुपेत्य विषुवन्तं महाव्रतमुपेयात्कथमनागूर्त्यै[12] भवतीति' यमेवामुं पुरस्ताद्विषुवतो ऽतिरात्रमुपयन्ति तेनेति ब्रूयात्तदाहुः कति संवत्सरस्य पराञ्च्यहानि भवन्ति कत्यर्वाञ्चि' तद्यानि सकृत्सकृदुपयन्ति तानि पराञ्च्यथ यानि पुनः पुनरुपयन्ति तान्यर्वाञ्चीत्येवैनान्युपासीरन्षडहयोर्ह्यावृत्तिमन्वावर्तन्ते[13]' ॥ १६ ॥

अथ यच्चतुर्विंशमहरुपेत्यानुपेत्य विषुवन्तं[14] महाव्रतमुपेयात्कथमनागूर्त्यै[15] भवतीति' यमेवामुं पुरस्ता-

---

1) दशरात्री C; 2) नु A; 3) °मुर्ध्वै E; 4) So corr.; die hss. °पागातां वृत्तै°; 5) ?; es kommt nog einige Malen in diesem Texte vor; 6) यज्ञक्रतं C und E; 7) जानीयो E; 8) °स्तोमो A, B und E; 9) तत्र C; 10) ऽतिष्ठांस्तिष्ठति B; 11) So corr.; die hss. प्रतिष्ठति; 12) So corr.; die hss. °नाकूल्यै; 13) °त्येवैनां न्युपस्ती° A, B, C; 14) विषुवन्त E; 15) So corr.; die hss. °नाकूर्त्यै.

द्विषुवतो ऽतिरात्रमुपयन्ति[1] तेनेति ब्रूयादभिप्लवं पुरस्ताद्विषुवतः पूर्वमुपयन्ति ' पृष्ठ्यमुपरिष्टात्पिता वा अभिप्लवः पुत्रः पृष्ठ्यस्तस्मात्पूर्वे वयसि पुत्राः पितरमुपजीवन्ति ' पृष्ठ्यं[2] पश्चाद्विषुवतः पूर्वमुपयन्त्यभिप्लवमुपरिष्टात्पिता वा अभिप्लवः ' पुत्रः पृष्ठ्यस्तस्मादुत्तमे वयसि पुत्रान्पितोपजीवति[3] य एवं वेद ' तदप्येतदृचोक्तं शतमिन्नु शरदो अन्ति देवा यत्रा नश्चक्रा जरसं तनूनाम्[4] । पुत्रासो यत्र पितरो भवन्ति मा नो मध्या रीरिषतायुर्गन्तोरित्युप ह वा एनं पूर्वे वयसि पुत्राः पितरमुपजीवन्त्युपोत्तमे वयसि पुत्रान्पितोपजीवति[5] य एवं वेद ' ॥ १७ ॥

अथ हैष महासुपर्णस्तस्य यान्पुरस्ताद्विषुवतः षण्मासानुपयन्ति स दक्षिणः[6] पक्षो[7] ' ऽथ यानावृत्तानुपरिष्टात्षडुपयन्ति स उत्तरः पक्ष[8] ' आत्मा वै संवत्सरस्य विषुवानङ्गानि[9] पक्षौ ' यत्र वा आत्मा तत्पक्षौ ' यत्र वै पक्षौ तदात्मा ' न वा आत्मा पक्षावतिरिच्यते[10] ' नो पक्षावात्मानमतिरिच्येते[11] इत्येवमु हैव तदपरेषां स्वि-

---

1) त्रिरात्र° A; 2) पृष्ठं C; 3) °ज्ञीवन्ति A und B; 4) ज्ञनूनाम् E; 5) °ज्ञीवन्ति A, B und E; 6) दक्षिणात: E; 7) पक्ष्यो B; 8) Fehlt in B; 9) विषुवानाङ्गानि B und C; 10) So corr.; die hss. °च्येते; 11) So corr.; die hss. °रिच्यन्त.

दितमङ्गं[1] परेषामित्यपरेषां चैव परेषां चेति ब्रूयात्' ॥ १८ ॥

तदाहुर्यद्द्वादश मासाः संवत्सरो ऽथ[2] हैतदहरवाप्नुयामेति[2] ' यद्विषुवतमपरेषां स्विदितमङ्गं परेषामित्यपरेषां चैव परेषां चेति ब्रूयादात्मा वै संवत्सरस्य विषुवानङ्गानि मासा[3] ' यत्र वा आत्मा तदङ्गानि ' यत्राङ्गानि तदात्मा ' न वा[4] आत्माङ्गान्यतिरिच्यते[4] नो ऽङ्गान्यात्मानमतिरिच्यन्त इत्येवमु हैव तदपरेषां स्विदितमङ्गं[5] परेषामित्यपरेषां चैव परेषां चेति ब्रूयात्स वा एष संवत्सरः' ॥ १९ ॥

तदाहुः कथमुभयतोज्योतिषो ऽभिप्लवा अन्यतरतोज्योतिः[6] पृष्ठ इत्युभयतोज्योतिषो वा इमे लोका[7] अग्निनेत आदित्येनामुत इत्येष ह वा एतेषां ज्योतिर्य एनं[8] प्रमृदीव[9] तपति ' देवचक्रे ह वा एते पृष्ठप्रतिष्ठिते[10] पाप्मानं तृंहती[11] परिप्लवेते[12] ' तद्य एवं विदुषां दीक्षितानां पापकं कीर्तयदेते[13] एवास्य तद्देवचक्रे शिर-

1) Corrupt!; 2) ऽथैतदह° A und E; 3) So corr.; die hss. मासौ; 4) वात्मा° E; °रिच्येते B und E; 5) स्विदितिमङ्गं B; 6) अन्यतरोज्योतिः B, C und E; 7) लोको E; 8) ?; 9) ?? B प्रमृदिव; 10) पृष्ठ्यं प्रति° B; पृष्ठः प्रति° C; 11) तृंहन्ती B und C; 12) परिप्लवते A; 13) So corr.; A, B und C °येदेत; E °येदेव.

श्छन्दतो[1] ' दशरात्रमुद्धिः[2] ' पृष्ठ्याभिप्लवौ चक्रे ' दशरात्रमुद्धिं[3] पृष्ठ्याभिप्लवौ चक्रे तत्त्वं कुर्वीतेति ह स्माह[4] वास्युस्तयो[5] स्तोत्राणि च शस्त्राणि च संचारयेद्यः[6] संचारयेत्तस्मादिमे पुरुषे प्राणा[7] नाना सन्त एकोदयाच्छरीरमधिवसति यन्न संचारयेत्प्रमायुको ह यजमानः स्यादेष ह वै प्रमायुको यो ऽन्धो वा बधिरो वा ' नवाग्निष्टोमा मासि संपद्यन्ते ' नव वै प्राणाः[8] ' प्राणैर्यज्ञस्तायत ' एकविंशतिरुक्थ्या ' एक[9] उक्थ्यः[9] षोडश्यन्नं वा उक्थ्यो[10] ' वीर्यं षोडश्येव[11] ' तथा[12] त्रूढा स्वर्गं लोकमध्यारोहन्ति[13] ' ॥ २० ॥

अथातो ऽह्नामध्यारोहः ' प्रायणीयेनातिरात्रेणोदयनीयमतिरात्रमध्यारोहन्ति[14] चतुर्विंशेन महाव्रतमभिप्लवेन परमभिप्लवं ' पृष्ठ्येन परं पृष्ठ्यमभिजिताभिजितं[15] स्वरसामभिः परान्स्वरसामानो ' ऽथैतदहरवाप्नुयामेति[16] यद्वैषुव्रतमपरेषां[17] स्विदितमह्नां[18] परेषामित्यपरेषां चैव

1) शिरश्छन्दतो B und E; 2) °मुद्धिं C; 3) °मुद्धि E; 4) Fehlt in E; 5) वास्युस्तायो B; वास्यस्तयो C; 6) संचारेयः A; 7) प्राणान् B; 8) Fehlt in B; 9) एकोक्थ्यः A und B; एकोक्थ्याः C; 10) उक्थ्यं B; 11) षोडश्यैव A; षोडशैव B; 12) So corr.; die hss. तया; 13) A, B und C fügen noch zu: यदध्यारोहन्ति; 14) प्रानीयेना° B; 15) पृष्ठ्यामभि° C; 16) ऽथ हैतद° B, C und E; 17) यद्वैषुव्रतपरेषां C; 18) स्विदितिमह्नां B.

परेषां चेति ब्रूयात्स वा एष संवत्सरः ' ॥ २१ ॥

अथातो ऽह्नां निवाहः[1] 'प्रायणीयो ऽतिरात्रश्चतुर्विं-
शायाह्ने निवहति ' चतुर्विंशमहरभिप्लवायाभिप्लवः पृ-
ष्ठ्याय ' पृष्ठ्यो ऽभिजिते ' ऽभिजित्स्वरसामभ्यः ' स्वरसामानो
विषुवते ' विषुवान्स्वरसामभ्यः ' स्वरसामानो विश्वजिते '
विश्वजित्पृष्ठ्याभिप्लवाभ्यां ' पृष्ठ्याभिप्लवौ[2] गवायुर्भ्यां ' गवा-
युषी दशरात्राय ' दशरात्रो महाव्रताय ' महाव्रतमुदनीया-
यातिरात्रायोदयनीयो ऽतिरात्रः स्वर्गाय लोकायान्नाद्याय
प्रतिष्ठित्यै ' ॥ २२ ॥

आदित्याश्च ह वा अङ्गिरसश्च[3] स्वर्गे लोके ऽस्पर्धन्त
वयं पूर्वे स्वरेष्यामो[4] वयं पूर्व इति ' त आदित्या लघुभिः
सामभिश्चतुर्भि स्तोमैर्द्वाभ्यां पृष्ठ्याभ्यां स्वर्गं लोकमभ्यप्ल-
वन्त ' यदभ्यप्लवन्त तस्मादभिप्लवो ' ऽन्वञ्च एवाङ्गिरसो
गुरुभिः सामभिः[5] सर्वैः स्तोमैः सर्वैः पृष्ठैः स्वर्गं[6] लो-
कमभ्यस्पृशन्त ' यदभ्यस्पृशन्त तस्मात्स्पृश्यस्तं[7] वा एतं
स्पृश्यं[8] सन्तं[9] पृष्ठ्य[10] इत्याचक्षते[11] परोक्षेण ' परो-

---

1) नीवाहः: A, C und E; 2) पृष्ठ्याभि° A; 3) चाङ्गिरसश्च B und E; 4) स्वरेष्यासो E; 5) Fehlt in B; समाभिः E; 6) स्वर्गां B; 7) So corr. तस्मात्पृष्ठ्यस्तं A und C; तस्मात्पृष्ठ्यस्तं E; तस्मात्पृष्ठ्यतं B; 8) स्पृष्टं B; 9) सन्तः C; 10) स्पृष्ठ्य A; पृष्ठ्या E und B; 11) Von इत्याचक्षते bis निर्मितः fehlt in B.

क्षप्रिया इव हि देवा भवन्ति प्रत्यक्षद्विषो ' ऽभिप्लवा-त्पृष्ठ्यो निर्मितः ' पृष्ठ्यादभिजिदभिजितः[1] स्वरसामानः[2] ' स्वरसामभ्यो विषुवान्विषुवतः स्वरसामानः ' स्वरसाम-भ्यो विश्वजिद्विश्वजितः पृष्ठ्याभिप्लवौ ' पृष्ठ्याभिप्लवाभ्यां गवायुषी ' गवायुर्भ्यां दशरात्रस्तानि ह वा एतानि यज्ञा-रण्यानि यज्ञकृन्तत्राणि[3] ' तेषां शतं शतं रथानान्यन्तरं[4] तद्यथारण्यान्यारूढा[5] अशनापिपासे[6] ते पाप्मानं तृंहती[7] परिप्लवेते ' एवं[8] हैवैते प्रप्लवन्ते ये ऽविद्वांस[9] उपय-न्त्यथ[10] ये विद्वांस[11] उपयन्ति तद्यथा प्रवाहात्प्रवाहं स्थलात्स्थलं समात्समं सुखात्सुखमभयादभयमुपसंक्रामन्ती-त्येवं[12] हैवैते संवत्सरस्योदृचं समश्नवामहा इति ब्रा-ह्मणम् ' ॥ २३ ॥

प्रेदिर्ह वै कौशाम्बेयः कौसुरुबिन्दुरुद्दालक[13] आरु-णौ[14] ब्रह्मचर्यमुवास[15] ' तमाचार्यः पप्रच्छ[16] कुमार कति

1) अभिजित् fehlt in E; 2) Fehlt in E; 3) ?? A, B und C यज्ञकृतन्त्राणि; 4) Sic! B रथानां न्यन्तरं; E रथान्यंतरं; Ś. B. रथाह्ना-न्यन्तरेण; 5) तद्यथारण्यां न्या° A; तद्यथाराण्या° E; 6) अशनायपिपासे A pr. m.; अशनापिसे E; 7) So corr.; die hss. दृंहती; 8) एव E; 9) विद्वास B; विद्वांसम् A und C; 10) उपयत्यग E; 11) विद्वांसम् A und C; 12) °क्रामन्त्येवं C; 13) कौशुरबिंदु° E; 14) आरुणो A, C und E; 15) So corr. nach Ś. B. XII 2. 2. 13; die hss. °मुवाच; 16) पप्रच्छ B.

ते पिता संवत्सरस्याह्नान्यमन्यतेति[1] ' कति[2] त्वेवेति[2] ' दशेति होवाच ' दश वा इति होवाच ' दशाक्षरा विराड्वैराजो यज्ञः ' कति त्वेवेति ' नवेति होवाच ' नव वा इति होवाच ' नव वै प्राणाः ' प्राणैर्यज्ञस्तायते[3] ' कति त्वेवेत्यष्टेति[4] होवाचाष्टौ वा इति होवाचाष्टाक्षरा गायत्री ' गायत्रो यज्ञः ' कति त्वेवेति सप्तेति होवाच ' सप्त वा इति होवाच ' सप्त छन्दांसि ' छन्दोभिर्यज्ञस्तायते ' कति त्वेवेति ' षडिति होवाच ' षड्वा इति होवाच ' षड्वा ऋतव ' ऋतूनामाप्त्यै ' कति त्वेवेति[5] ' पञ्चेति होवाच ' पञ्च वा इति होवाच ' पञ्चपदा पङ्क्तिः ' पाङ्क्तो यज्ञः ' कति त्वेवेति ' चत्वारीति[6] होवाच ' चत्वारि वा इति होवाच ' चत्वारो वै वेदा[7] ' वेदैर्यज्ञस्तायते ' कति त्वेवेति[8] ' त्रीणीति होवाच ' त्रीणि[9] वा[9] इति[9] होवाच ' त्रिषवणो वै यज्ञः ' सवनैर्यज्ञस्तायते ' कति त्वेवेति ' द्वे इति होवाच ' द्वे[10] वा इति होवाच ' द्विपाद्वै पुरुषो ' द्विप्रतिष्ठः[11] पुरुषः ' पुरुषो[12] वै यज्ञः ' कति त्वेवेत्येकमिति

---

1) °न्यथेति A, B und C; 2) So alle hss.; man erwartet es hier nicht. Im Ś. Br. fehlt es; 3) प्रापौर्यज्ञै° E; 4) त्वेवेतिष्टेति E; 5) त्वेति B; 6) चत्वारिति B; 7) Fehlt in B; 8) B fügt हो ein; 9) त्रीनिति B; 10) द्वि C und E; 11) द्विप्रतिष्ठितः E; 12) पुरुषौ B.

होवाचैकं[1] वा इति होवाचाहरहरित्येव सर्वं संवत्सरं ' ॥ २४ ॥

॥ इत्यथर्ववेदे गोपथब्राह्मणपूर्वभागे चतुर्थः प्रपाठकः ॥

---

ओमभिप्लवः षडहः ' षडहानि[2] भवन्ति ज्योतिर्गौरायुर्गौरायुर्ज्योतिरभिप्लवः[3] पञ्चाहः[4] ' पञ्च ह्येवाहानि भवन्ति ' यद्येव[5] प्रथममहस्तदुत्तममहरभिप्लवश्चतुरहश्चत्वारो[6] हि स्तोमा भवन्ति त्रिवृत्पञ्चदशः[7] सप्तदश एकविंश[8] एवाभिप्लवस्त्र्यहस्त्र्यावृत्तिर्ज्योतिर्गौरायुरभिप्लवो[9] द्व्यहो ' द्वे ह्येव सामनी[10] भवतो बृहद्रथंतरे[11] एवाभिप्लव[12] एकाह ' एकाहस्य हि[13] स्तोमैस्तायते ' चतुर्णामुक्थ्यानां[14] द्वादश स्तोत्राण्यतिरिच्यन्ते ' स सप्तमोऽग्निष्टोमस्तथा[15] खलु सप्ताग्निष्टोमा मासि संपद्यन्त इति ब्राह्मणम् ' ॥ १ ॥

अथातो गाधप्रतिष्ठा[16] ' समुद्रं वा एते प्रतरन्ति ये

---

1) होवाचैकैकैकं E; 2) षड्वाहानि C; षडह: षडूयहानि E; 3) ज्योतिगौरायुगौ° E; 4) Von पञ्चाह: bis चतुरहश्च° fehlt in E; 5) So corr.; die hss. यचेव; 6) °तुरहत्वाश्चत्वारो E; 7) °दशा A pr. m.; 8) °विंशा A, B und C; 9) °हस्त्र्यहावृत्ति° B; 10) समनी B; सामानी C und E; 11) °थंतर A pr. m.; C und E; 12) °भिप्लवं C; 13) Fehlt in den hss.; 14) °मुकथाना E; 15) ऽग्निष्टोमास्तथा A; 16) गाधप्रतिष्ठ C.

संवत्सराय दीक्षन्ते ' तेषां तीर्थमेव प्रायणीयो ऽतिरात्रस्तीर्थेन हि प्रतरन्ति ' तद्यथा समुद्रं तीर्थेन प्रतरेयुस्तादृक्तद्गाधं प्रतिष्ठा चतुर्विंशमहर्यथोपकक्षदघ्नं वा[1] कण्ठदघ्नं[2] वा यतो[3] विश्रम्य[4] प्रस्नायेयुस्तादृक्तत्प्रस्नेयो ऽभिप्लवः ' प्रस्नेयः पृष्ठ्यो ' गाधं प्रतिष्ठाभिजिद्यथोपकक्षदघ्नं वा कण्ठदघ्नं[5] वा यतो विश्रम्य प्रस्नायेयुस्तादृक्तन्नीविदघ्न एव प्रथमः स्वरसामा ' जानुदघ्नो द्वितीयः ' कुल्फदघ्नस्तृतीयो[6] ' द्वीपः[7] प्रतिष्ठा विषुवान्यथोपकक्षदघ्नं वा कण्ठदघ्नं वा यतो[8] विश्रम्य[9] प्रस्नायेयुस्तादृक्तत्कुल्फदघ्न[10] एव प्रथमो ऽर्वाक्स्वरसामा[11] ' जानुदघ्नो द्वितीयो ' नीविदघ्नस्तृतीयो ' गाधं प्रतिष्ठा[12] विश्वजिद्यथोपकक्षदघ्नं वा कण्ठदघ्नं वा यतो विश्रम्य प्रस्नायेयुस्तादृक्तत्प्रस्नेयः पृष्ठ्यः प्रस्नेयो ऽभिप्लवः[13] प्रस्नेये[14] गवायुषी प्रस्नेयो दशरात्रो ' गाधं प्रतिष्ठा महाव्रतं[15] यथोपकक्षदघ्नं[16] वा कण्ठदघ्नं वा यतो विश्रम्य प्रस्नायेयुस्तादृक्तत्तेषां[17] तीर्थमेवोदय-

---

1) वा न B; 2) °दग्धं E; 3) यातो E; 4) विश्राम्य E; 5) कण्ठं दघ्नं B; 6) कुल्युद° A und E; कुल्यद° C; 7) So corr. nach Ś. Br.; die hss. द्वीप:; 8) युतो C; 9) द्विश्रम्य C; 10) °त्कुल्यु° A, B und E; °त्कुल्य° C; 11) Von ऽर्वाकस्व° bis यथोपक° fehlt in B; 12) प्रतिष्ठां C; 13) ऽभि: प्लव: A pr. m.; 14) So corr.; die hss. प्रस्नेयो; 15) महां व्रतं E; 16) °क्षदघ्नं E; 17) °क्तास्तेषां B.

नीयो ऽतिरात्रस्तीर्थेन ह्युपयन्ति[1] ' तद्यथा समुद्रं तीर्थे-नोदियुस्तादृत्तादथ ह स्माह श्वेतकेतुरारुणेयः संवत्सराय[2] न्वहं दिक्षा इति ' तस्य ह पिता मुखमुदीक्ष्योवाच[3] वेत्थ[4] नु[4] त्वमायुष्मन्त्संवत्सरस्य[4] गाधप्रतिष्ठे[5] इति[5] ' वेदेत्यैतद्ध स्मैतद्विद्वानाहेति ब्राह्मणम् ' ॥ २ ॥

पुरुषो वाव संवत्सरस्तस्य पादावेव प्रायणीयो ऽतिरात्रः ' पादाभ्यां हि[6] प्रयन्ति ' तयोर्यच्छुक्लं तदह्नो रूपं ' यत्कृष्णं तद्रात्रेर्नखानि नक्षत्राणां रूपं ' लोमान्योषधिवनस्पतीनामूरू[7] चतुर्विंशमहरूरो[8] ऽभिप्लवः[9] ' पृष्ठं[10] पृष्ठ्यः ' शिर[11] एव त्रिवृत्त्रिवृतं ह्येव शिरो भवति[12] त्वगस्थि मज्जा मस्तिष्कं ' ग्रीवाः पञ्चदशश्चतुर्दश ह्येवैतस्यां[13] कङ्ककराणि[14] भवन्ति ' वीर्यं पञ्चदशं[15] ' तस्मादाभिरण्वीभिः[16] सतीभिर्गुरुं[17] भारं[18] हरति ' तस्माद्ग्रीवाः

1) ह्रुपन्ति B; ह्रुयन्तिः E; 2) So corr.; °संवत्सरस्या A und C; सवत्सरस्यां B und E; 3) °सोवाच C; 4) वेत्थनुत्वमनायुष्मान्त्सं° B; alle hss. °ष्मान्त्संव°; 5) °तिष्ठेति E; 6) Fehlt in B; 7) लोमान्योषधी° A pr. m.; °न्योषधिं वनस्प° C; °न्योषधेवनस्प° E; 8) °विंशहरो E; °शमहरोरु B; °शमहत्रो C; 9) भिप्लवं B; 10) पृष्ठं fehlt in alle hss.; 11) शिवर् E; 12) भवन् A, B und E; 13) ग्रीवा wird im Sing. und im Plur. gebraucht; 14) कङ्ककरावि C; कंकरणी E; 15) पञ्चदश E; 16) Die hss. तस्मादियमाभिरण्वीभिः; 17) °भिर्गुरं B; 18) भरं B.

पञ्चदश ' उरः सप्तदशो ' ऽष्टावन्ये[1] जत्रवो[2] ऽष्टावन्य ' उरः सप्तदशं[3] ' तस्मादुरः[3] सप्तदश ' उदरमेकविंशो[4] ' विंशतिर्ह्येवैतस्यान्तर उदरे कुन्तापानि[5] भवन्त्युदरमेकविंशं[6] ' तस्मादुदरमेकविंशः ' पार्श्वे त्रिणवस्त्रयोदशान्याः[7] पर्शवस्त्रयोदशान्याः[8] पार्श्वे त्रिणवे[3] ' तस्मात्पार्श्वे[3] त्रिणवो ' ऽनूकं त्रयस्त्रिंशो[9] ' द्वात्रिंशतिर्ह्येवैतस्य पृष्टीकुण्डीलानि[10] भवन्त्यनूकं त्रयस्त्रिंशं ' तस्मादनूकं त्रयस्त्रिंशस्तस्यायमेव[11] दक्षिणो बाहुरभिजित्तस्येमे दक्षिणे त्रयः प्राणाः स्वरसामान ' आत्मा विषुवांस्तस्येमे सव्ये त्रयः प्राणा अर्वाक्स्वरसामानस्तस्यायं[12] सव्यो बाहुर्विश्वजिदुत्तौ पृष्ठ्याभिप्लवौ ' याववाञ्चौ प्राणौ ते[13] गवायुषी ' अङ्गानि दशरात्रो[14] ' मुखं महाव्रतं ' तस्य हस्तावेवोदयनीयो ऽतिरात्रो ' हस्ताभ्यां ह्युद्यन्ति ' ॥ ३ ॥

पुरुषो वाव संवत्सरस्तस्य प्राण एव प्रायणीयो ऽतिरात्रः ' प्राणेन हि प्रयन्ति ' वागारम्भणीयमहर्यद्वार-

1) ऽष्टावह्रे B; 2) यत्रवो A, B und C; 3) Fehlt in B; 4) उरमेकंविंशो E; 5) कुन्तापामि B; कुतापानि C; 6) भवत्यु° B; Im E fehlt von शं तत्सा° bis °यस्त्रिंशो; 7) °दशांन्याः C; 8) पर्शवन्याः A, B und E; 9) Von त्रयत्रिंशो bis त्रयस्त्रिंशस्त° fehlt in B; 10) ? ?; 11) °शंस्तस्मायमेव C; 12) अवाक्स्व° B; 13) So corr.; die hss. तौ; 14) दशरात्रा E.

भते[1] वागारभते' वचैव तदारभते' तस्यायमेव दक्षिणः पाणिरभिप्लवस्तस्येदं प्रातःसवनमिदं माध्यंदिनं[2] सवनमिदं तृतीयसवनं' गायत्र्या आयतने' तस्मादियमस्यै[3] ह्रसिष्ठा' तस्येदं प्रातःसवनमिदं माध्यंदिनं सवनमिदं तृतीयसवनं' त्रिष्टुभ[4] आयतने' तस्मादियमस्यै[5] वरिष्ठा[6]' तस्येदं प्रातःसवनमिदं माध्यंदिनं सवनमिदं तृतीयसवनं[7]' जगत्या आयतने[8]' तस्मादियमनयोर्वरिष्ठा' तस्येदं प्रातःसवनमिदं[9] माध्यंदिनं सवनमिदं तृतीयसवनं' पङ्क्त्या आयतने[10]' पृथुरिव वै पङ्क्तिस्तस्मादियमासां[11] प्रथिष्ठा[12]' तस्येदं प्रातःसवनमिदं माध्यंदिनं सवनमिदं तृतीयसवनं' विराज[13] आयतने' ऽन्नं वै श्रीर्विराडन्नाद्यमन्नाद्यस्य[14] श्रियो[15] ऽवरुद्धै' तस्मादियमासां[16] वरिष्ठा[17]' तस्येदं प्रातःसवनमिदं माध्यंदिनं सवनमिदं तृतीयसवनमतिछन्दस[18] आयतने[19]' ऽतिछन्दो[20] वै छन्दसामायतनं'

---

1) °मद्यपदा° C; 2) मध्यंदिनं E; 3) Man erwartet °मासां; 4) त्रिष्टुभा A pr. m.; und B; 5) Vgl. 3; 6) वशिष्ठा B und C; 7) तृतीयं सवनं E; 8) आयतनो A pr. m.; 9) प्रतिःसव° E; 10) आयतनो E; 11) पङ्क्तिं तस्मा° E; °वनासां B; 12) Alle hss. प्रतिष्ठा; 13) विराजा A pr. m. und B; 14) So corr.; die hss. श्रीर्विराडन्नाद्यस्य; 15) श्रीयो B und E; 16) तस्मादय° C; 17) वसिष्ठः B; 18) °तिछन्दसा A pr. m. und B; 19) आयतनाने C; 20) ऽतिछन्दो B.

तस्मादिदं[1] प्रथिष्ठं[2] फलकं[3] ' तस्येदं प्रातःसवनमिदं माध्यंदिनं सवनमिदं तृतीयसवनं ' स[4] इतः[4] स[4] इतो[4] ऽभिप्लवः स[5] इत[5] आत्मा पृष्ठ्यः ' प्लवतीवाभिप्लवस्तिष्ठतीव पृष्ठ्यः ' प्लवत इव ह्येवमङ्गैस्तिष्ठतीवात्मना[6] ' तस्यायमेव[7] दक्षिणः कर्णो ऽभिजित्तस्य यद्दक्षिणमक्ष्णः[8] शुक्लं[9] स प्रथमः स्वरसामा ' यत्कृष्णं[10] स द्वितीयो ' यन्मण्डलं[11] स[12] तृतीयो[12] ' नासिके विषुवान्मंडलमेव प्रथमो ऽर्वाक्स्वरसामा[13] ' यत्कृष्णं स द्वितीयो[14] ' यच्छुक्लं[15] स तृतीयस्तस्यायं[16] सव्यः कर्णो विश्वजिदुक्तौ पृष्ठ्याभिप्लवौ ' यावर्वाञ्चौ प्राणौ ते गवायुषी ' अङ्गानि दशरात्रो[17] ' मुखं महाव्रतं ' तस्योदान एवोदयनीयो[18] ऽतिरात्र ' उदानेन ह्युद्यन्ति[19] ' ॥ ४ ॥

पुरुषो वाव संवत्सरः[20] ' पुरुष इत्येकं ' संवत्सर[21] इत्येकमंत्र[22] तत्समं ' द्वे अहोरात्रे संवत्सरस्य ' द्वाविमौ

---

1) तस्मादिनं C; 2) Die hss. प्रतिष्ठं; 3) फलनं B; 4) So corr.; die hss. सैत: सैतो; 5) Die hss. सैत; 6) °वात्माना C; 7) तस्माय° E; 8) °णमक्ष: B; 9) शुक्र: B; 10) Die hss. यकृष्णं; 11) यन्मडलं A; यन्मडं B; 12) संन्तृतीया B; 13) ऽर्वाकस्वर° B, C und E; 14) द्वीतीयो B; 15) यच्छुक्र C; 16) तृतीयंस्त° E; 17) दशरात्रौ B, C und E; 18) °यनाह्यो E; 19) °ह्युध्यन्ति C; 20) °त्सरा B; 21) So corr.; die hss. संवत्सरं; 22) So corr.; die hss. इत्येक इयत्र.

पुरुषे प्राणावित्यंत्र[1] तत्समं ' त्रयो[2] वा ऋतवः संव-
त्सरस्य ' त्रय इमे पुरुषे प्राणा इत्यंत्र तत्समं ' षड्वा[3]
ऋतवः संवत्सरस्य ' षडिमे पुरुषे प्राणा इत्यंत्र तत्समं '
सप्त वा ऋतवः संवत्सरस्य ' सप्तेमे[4] पुरुषे प्राणा इत्यंत्र
तत्समं ' द्वादश मासाः संवत्सरस्य ' द्वादशेमे पुरुषे प्राणा
इत्यंत्र तत्समं ' त्रयोदश मासाः संवत्सरस्य ' त्रयोदशेमे
पुरुषे प्राणा इत्यंत्र तत्समं ' चतुर्विंशतिरर्धमासाः संव-
त्सरस्य ' चतुर्विंशो ऽयं[5] पुरुषो ' विंशत्यङ्गुलिश्चतुरङ्ग
इत्यंत्र तत्समं ' षड्विंशतिरर्धमासाः संवत्सरस्य ' षड्विंशो[6]
ऽयं पुरुषः ' प्रतिष्ठे षड्विंशे[7] इत्यंत्र तत्समं ' त्रीणि च ह
वै शतानि षष्टिश्च[8] संवत्सरस्याहोरात्राणीत्येंतावन्त एव
पुरुषस्य प्राणा इत्यंत्र तत्समं ' सप्त च ह[9] वै शतानि
विंशतिश्च संवत्सरस्याहानि च रात्रयश्चेत्येंतावन्त एव
पुरुषस्यास्थीनि[10] च मज्जानश्चेत्यंत्र तत्समं ' चतुर्दश च
ह वै शतानि चत्वारिंशच्च संवत्सरस्यार्धाहाश्चार्धरात्रय-
श्चेत्येंतावन्त[11] एव पुरुषस्य स्थूरा[12] मांसानीत्यंत्र[13] त-
त्सममंष्टाविंशतिश्च ह वै शतान्यशीतिश्च संवत्सरस्य

---

1) So corr.; die hss. प्राणा उत्यत्र; 2) Von त्रयो bis स्वेदायनानि fehlt in B; 3) षड्वा E; 4) सप्तमे C; 5) मे E; 6) षड्विंशो E; 7) षड्विंशे E; 8) षष्टु E; 9) हे E; 10) पुरुषस्थीनि E; 11) संवत्सरस्यार्धाश्चार्ध° E; 12) स्थुरा E; 13) मासानी° E.

पादाह्नाश्च पादरात्रयश्चेत्येतावन्त[1] एव पुरुषस्य स्नावा[2] बन्ध्या[3] इत्यत्र तत्समं ' दश च ह वै सहस्राण्यष्टौ च शतानि संवत्सरस्य मुहूर्ता[4] इत्येतावन्त एव पुरुषस्य पेशशमरा[5] इत्यत्र तत्समं ' यावन्तो मुहूर्ताः[4] पञ्चदश कृत्वस्तावन्तः प्राणा ' यावन्तः प्राणाः पञ्चदश कृत्वस्तावन्तो ऽपाना ' यावन्तो ऽपानाः पञ्चदश कृत्वस्तावन्तो[6] व्याना ' यावन्तो व्यानाः पञ्चदश कृत्वस्तावन्तः समाना ' यावन्तः समानाः पञ्चदश कृत्वस्तावन्त उदाना ' यावन्त उदानाः पञ्चदश कृत्वस्तावन्त्येतादीनि[7] ' यावन्त्येतादीनि तावन्त्येतर्हीणि ' यावन्त्येतर्हीणि[8] तावन्ति[9] स्वेदायनानि[10] ' यावन्ति स्वेदायनानि तावन्ति क्षिप्रायणानि ' यावन्ति क्षिप्रायणानि तावन्तो रोमकूपा ' यावन्तो रोमकूपाः पञ्चदश कृत्वस्तावन्तो[11] वर्षतो धारास्तदेतत्क्रोशशतिकं[12] परिमाणं ' तदप्येतदृचोक्तं श्रमादन्यत्र परिवर्तमानश्चरन्वासीनो[13] यदि वा स्वपन्नपि । अहोरात्राभ्यां पुरुषः क्षणेन कति कृत्वः[14] प्राणिति[15] चापानिति[16] च '

---

1) पादारात्र° E; 2) स्तावा C; स्ताव E; 3) त्रिध्या E; 4) मूहूर्ता A; महूर्ता C; 5) शास्समरा E; 6) °वतो E; 7) °तादिनि A pr. m.; 8) यावन्तेतर्हीणि A, B und C; 9) B fügt ein सप्तवा ऋतवः पितावन्ति; 10) स्वदाय° B; 11) °वत्यो A; °वन्त्यो C und E; 12) °देतक्रोशशत्तिं कं C; 13) °न्वासतो E; 14) कृत्वा C; कृत्यः E; 15) प्रापाति B und E; 16) चापानति B; चापानितिति E.

शतं शतानि परिवत्सराणामंष्टौ च शतानि संवत्सरस्य[1] मुहूर्तान्यान्वदत्यहोरात्राभ्यां[2] पुरुषः समेन कति[3] कृत्वः प्राणिति[4] चापानिति[5] चेति ब्राह्मणम्' ॥ ५ ॥

संवत्सरस्य समता वेदितव्येति[6] ह स्माह वात्स्युरेकमेव पुरस्ताद्विषुवतो ऽतिरात्रमुपयन्त्येकमुपरिष्टाच्चिंपञ्चाशतमेव पुरस्ताद्विषुवतो ऽग्निष्टोमानुपयन्ति त्रिपञ्चाशतमुपरिष्टाद्विंशतिशतमेव[7] पुरस्ताद्विषुवत उक्थ्यानुपयन्ति विंशतिशतमुपरिष्टात्षडेव पुरस्ताद्विषुवतः षोडशिन[8] उपयन्ति षडुपरिष्टाच्चिंशदेव पुरस्ताद्विषुवतः षडहानुपयन्ति त्रिंशदुपरिष्टात्सैषा संवत्सरस्य समता' स य एवमेतां संवत्सरस्य समतां वेद संवत्सरेण सात्मा[9] सलोको भूत्वा देवानप्येतीति ब्राह्मणम्' ॥ ६ ॥

अथातो यज्ञक्रमा' अग्न्याधेयमग्न्याधेयात्पूर्णाहुतिः[10]' पूर्णाहुतेरग्निहोत्रमग्निहोत्राद्दर्शपूर्णमासौ[11]' दर्शपूर्णमासाभ्यामाग्रयणमाग्रयणाच्चातुर्मास्यानि[12]' चातुर्मास्येभ्यः[13] प-

---

1) Fehlt in C und E; 2) मृहूर्ता° A und B; महूर्त न्यान्व° C; 3) तति C; 4) प्राणाति B; प्राणानि E; 5) चापानति A und B; 6) वेदिन्यव्येति C; वेतिदितव्येति E; 7) °परिष्टात्षडेव B; °परिष्टाद्विंशतमेव E; 8) षोडशिनं B; 9) सा ह्यात्मा A; स ह्यात्मा B; 10) °धेया: पूर्णाहुतिः B; °हूतिः C; 11) पुर्णा° C; दर्शपूर्णमासौ fehlt in C; 12) दर्शपौर्ण° B; ह्याग्रयणम् fehlt in B; °तुर्मासानि E; 13) चातुर्मासेभ्यः B.

शुबन्धः ' पशुबन्धादग्निष्टोमो[1] ' ऽग्निष्टोमाद्राजसूयो ' राजसूयाद्वाजपेयो ' वाजपेयादश्वमेधो ' ऽश्वमेधात्पुरुषमेधः ' पुरुषमेधात्सर्वमेधः ' सर्वमेधाद्दक्षिणावन्तो[2] ' दक्षिणावद्भ्यो ऽदक्षिणा ' अदक्षिणाः सहस्रदक्षिणे प्रत्यतिष्ठंस्ते[3] वा एते यज्ञक्रमाः ' स य एवमेतान्यज्ञक्रमान्वेद यज्ञेन सात्मा[4] सलोको भूत्वा देवानप्येतीति[5] ब्राह्मणम् ' ॥ ७ ॥

प्रजापतिरकामयतानन्त्यमश्नुवीयेति[6] ' सो ऽग्नीनाधाय पूर्णाहुत्यायजत[7] ' सो ऽन्तमेवापश्यत्सो[8] ऽग्निहोत्रेणेष्ट्वान्तमेवापश्यत्स दर्शपूर्णमासाभ्यामिष्ट्वान्तमेवापश्यत्स आग्रयणेनेष्ट्वान्तमेवापश्यत्स[9] चातुर्मास्यैरिष्ट्वान्तमेवापश्यत्स पशुबन्धेनेष्ट्वान्तमेवापश्यत्सो ऽग्निष्टोमेनेष्ट्वान्तमेवापश्यत्स[10] राजसूयेनेष्ट्वा राजेति[11] नामाधत्त ' सो ऽन्तमेवापश्यत्स वाजपेयेनेष्ट्वा[12] सम्राडिति नामाधत्त[13] ' सो ऽन्तमेवापश्यत्सो[14] ऽश्वमेधेनेष्ट्वा स्वराडिति[15] नामाधत्त ' सो ऽन्तमेवापश्यत्स[16] पुरुषमेधेनेष्ट्वा विराडिति नामाधत्त ' सो ऽन्तमे-

---

1) अग्निष्टोमो fehlt in B; 2) °णावतो A; 3) °तिष्ठस्ते B; °तिष्ठन्ति E; 4) स आत्मा A, B und E; 5) °नप्यतीति A; देवा अप्ययेतीति B; 6) So corr.; A °श्नुयेति; B °श्नुयेति; C °श्नुयेने; E °श्नुयति; 7) So corr.; °जेत A, C und E; °नेते B; 8) न्तमेवा° C; तमेवा° E; 9) आगृयणेने° E; आग्रयणेनं स्त्रान्तमेवा° B; 10) °पश्यात्स E; 11) राड्येति E; 12) °येनेष्ट्वां E; 13) °धत्ते C; 14) ऽन्तमवा° E; 15) स्वरडिति E; 16) ऽन्तमेवाश्यत्स A.

वापश्यत्स[1] सर्वमेधेनेष्ट्वा सर्वराडिति[2] नामाधत्त[3] सो ऽन्तमेवापश्यत्सो ऽहीनैर्दक्षिणावद्भिरिष्ट्वान्तमेवापश्यत्सो[4] ऽहीनैरदक्षिणावद्भिरिष्ट्वान्तमेवापश्यत्स[5] सत्रेणोभयतो-[6] ऽतिरात्रेणान्ततो ऽयजत[7] ' वाचं[8] ह वै होत्रे प्रायच्छत्प्राणमध्वर्यवे[9] चक्षुरुद्गात्रे मनो ब्रह्मणे[10] ऽङ्गानि होत्रकेभ्य आत्मानं सदस्येभ्य[11] ' एवमानन्त्यमात्मानं दत्वानन्त्यमाश्नुत[12] ' तस्या दक्षिणा आनयत्ताभिरात्मानं[13] निष्क्रीणीय[14] ' तस्मादेतेन ज्योतिष्टोमेनाग्निष्टोमेनात्मनिष्क्रयणेन सहस्रदक्षिणेन[15] पृष्ठशमनीयेन[16] यजेत ' यो ह्यनिष्ट्वा[17] पृष्ठशमनीयेन[18] प्रैत्यात्मानं[19] सो ऽनिष्क्रीय[20] प्रैतीति[21] ब्राह्मणम् ' ॥ ८ ॥

यद्वै[22] संवत्सराय संवत्सरसदो[23] दीक्षन्ते कथमेषाम-

---

1) स fehlt in E; 2) सर्वाराडिति B; 3) °धत्तत् B und C; 4) ऽहीनैर्दक्षिणातद्भि° B; °न्त्वमेवापश्यत्सो C; 5) स fehlt in E; 6) °भवतो B; सतृणोभयते C; सत्रेणोभयते E; 7) So corr.; यज्ञेत A und C; यज्ञेत B; यज्ञेतं E; 8) वाच B; 9) °ध्वर्यवै B; °धर्यवै E; 10) ब्रह्मणो E; 11) सदस्योभ्य B; सदसेभ्य E; 12) So corr.; दत्वानन्त्यमश्नूयेति A; दत्वानन्तमश्नूयति B; दत्वानन्तमश्नुंयेति C; दत्वानन्तमश्नूयते E; 13) आनं यं ताभिरात्मानं E; आनयत्ता° B; 14) ? ? 15) सहस्रं दक्षिणेन E; 16) पृष्ठसम° E; 17) ह्येनिष्ट्वा B; 18) पृष्ठाश्न° B; 19) प्रीत्यात्मानं B; 20) So corr.; निष्क्रीणीय A, B, C; नीष्कृणीयतीं E; 21) प्रैति E; 22) यद्वैत्ये B; 23) संवत्सरदो C; °रसोदो E.

ग्निहोत्रमनन्तरितं[1] भवति[1] । व्रतेनेति[1] ब्रूयात्कथमेषां[2] दर्शो ऽनन्तरितो[3] भवति । दध्ना च पुरोडाशेन चेति ब्रूयात्कथमेषां पौर्णमासमनन्तरितं[4] भवत्याज्येन[5] च पुरोडाशेन चेति ब्रूयात्कथमेषामाग्रयणमनन्तरितं भवति । सौम्येन चरुणेति ब्रूयात्कथमेषां[6] चातुर्मास्यान्यनन्तरितानि[7] भवन्ति । पयस्ययेति[8] ब्रूयात्कथमेषां पशुबन्धो[9] ऽनन्तरितो भवति । पशुना च पुरोडाशेन चेति ब्रूयात्कथमेषां[10] सौम्यो ऽध्वरो[11] ऽनन्तरितो[12] भवति । ग्रहैरिति ब्रूयात्कथमेषां[13] गृहमेधो[13] ऽनन्तरितो भवति । धानाकरम्भैरिति ब्रूयात्कथमेषां पितृयज्ञो ऽनन्तरितो भवत्यौपासनैरिति[14] ब्रूयात्कथमेषां मिथुनमनन्तरितं भवति । हिंकारेणेति[15] ब्रूयात्सैषा संवत्सरे यज्ञक्रतूनामपीतिः[16] । स य एवमेतां संवत्सरे यज्ञक्रतूनामपीतिं[17] वेद[18] यज्ञेन सात्मा[19] सलोको[20] भूत्वा देवानप्येतीति ब्राह्मणम् ।
॥ १ ॥

---

1) Fehlt in B; 2) ब्रूयात् fehlt in B; 3) ऽनतरिसोतो B; 4) पौपामनन्तरितो B; 5) भवतित्या° B; 6) °त्कथमषां E; 7) चतु° E; 8) पयसेति A, C und E; 9) पश्रू° E; 10) °मेषो B; 11) ऽधरो E; 12) ऽनतरितो B und E; 13) Fehlt in E; 14) भवत्योपा° C; °सनोरिति E; 15) हिंकारोनेति C; 16) So corr.; die hss. °मुपैतिः; 17) So corr.; °तूनामुपैतिं A; °तूनामुपैते B; °तूनां मपैतिं C; °तूनां मुपैतिं E; 18) A fügt संवत्सरेण ein; 19) स आत्मा A, B und E; 20) संलोको E.

देवा ह वै सहस्रसंवत्सराय दिदीक्षिरे[1]। तेषां पञ्च शतानि संवत्सराणां पर्युपितान्यासन्नथेदं[2] सर्वं[3] शश्राम[4] ये स्तोमा यानि पृष्ठानि यानि[5] शस्त्राणि। ते देवा इहसामिवासुरुप[6] तं यज्ञक्रतुं[7] जानीमो यः सहस्रसंवत्सरस्य प्रतिमा। को हि तस्मै मनुष्यो यः सहस्रसंवत्सरेण यजेतेति। तद्यातयाम[8] मध्ये[9] यज्ञस्यापश्यंस्तेनायातयाम्ना[10] या[10] वेदे[10] व्यष्टिरासीत्तां[11] पञ्चस्वपश्यन्नृचि[12] यजुषि साम्नि[13] शान्ते ऽथ घोरे। ता वा[14] एताः पञ्च व्याहृतयो भवन्त्यो श्रावयास्तु[15] श्रौषड्यज ये यजामहे वौषडिति। ते देवा इहसामिवासुरुप[16] तं यज्ञक्रतुं जानीमो यः[17] सहस्रसंवत्सरस्य[17] प्रतिमा[17]। को[17] हि[17] तस्मै[17] मनुष्यो[17] यः सहस्रसंवत्सरेण[18] यजेतेति[19]। तत एतं तापश्चितं[20] सहस्रसंवत्सरस्याञ्जस्यमपश्यंस्ते[20] ह्येव

1) दीक्षन्ते C; दीक्षरे E; 2) पर्यपेतां न्यास° B und C; 3) सर्व्वं B; 4) So corr. nach Ś. Br., die hss. सुस्रुवु:; 5) B fügt शासनि ein; 6) ? ? 7) °क्रतु B und E; 8) तद्या fehlt in B; 9) मध्ये E; 10) So corr. nach Ś. Br.; °याम्या पेदे A; °याम्या य पेदे B; °याम्या या पेदे C; °याम्यां या पेदे E; 11) व्युष्टिरा° A, B und E; 12) So corr.; die hss. °पश्यन्नृचि; 13) साम्नि A, C und E; साम्ने B; 14) Fehlt in E; C व; 15) श्रव° A; श्रावया श्रस्तु B; 16) ? ?; 17) Fehlt in B; 18) सहस्रं वत्स° B; 19) यजेतिति B; श्रजेनेति C; यजेति E; 20) संवत्सरं तापश्चितस्या ञ्जस्यमपश्यंस्ते E.

स्तोमा भवन्ति तानि पृष्ठानि तानि शस्त्राणि ' स[1] खलु द्वादश मासान्दीक्षाभिरेति[2] द्वादशमासानुपसद्भिर्द्वादशमासांत्सुत्याभिरथ यद्द्वादश मासान्दीक्षाभिरेति द्वादशमासानुपसद्भिस्तेनैतावद्यर्कावाप्नोत्यथ[3] यद्द्वादश मासांत्सुत्याभिस्तेनेदं महदुक्थमवाप्नोति[4] ' ते देवा इहसामिवासुरुप[5] तं[6] यज्ञक्रतुं ज्ञानीमो यः सहस्रसंवत्सरस्य[7] प्रतिमा ' को हि तस्मै मनुष्यो[8] यः सहस्रसंवत्सरेण[9] यक्षेतेति ' तत[10] एतं[11] संवत्सरं[12] तापश्चितस्याञ्जस्यमपश्यंस्ते[12] ह्यैव स्तोमा भवन्ति तानि पृष्ठानि तानि शस्त्राणि ' ते[13] देवा इहसामिवासुरुप तं यज्ञक्रतुं ज्ञानीमो[14] यः सहस्रसंवत्सरस्य[15] प्रतिमा ' को हि तस्मै मनुष्यो यः सहस्रसंवत्सरेण[15] यक्षेतेति[16] ' तत एतं द्वादशाहं संवत्सरस्याञ्जस्यमपश्यंस्ते[17] ह्यैव स्तोमा भवन्ति तानि पृष्ठानि[18] तानि शस्त्राणि ' स खलु द्वादशाहं दीक्षाभिरेति द्वादशाहमुपसद्भिर्द्वादशाहं[19] सुत्याभिरथ यद्द्वादशाहं दी-

1) Von स bis ते दवा उह° fehlt in E; 2) मासा दीत्ता° B; 3) °वृग्नि-र्कावाप्नोत्यय B; 4) °मावाप्नोति B; 5) ? ? °सुन्नप° A, C und E; 6) तां C; 7) सहसंव° B; 8) मनुष्या C und E; 9) सहसं सं° B und E; 10) त B; 11) एवं A; 12) द्वादशाहं संवत्सरस्याञ्जस्यमपश्यस्ते E; 13) Von ते bis द्वादशाहमुपसभि° fehlt in E; 14) ज्ञानामो A und C; 15) सहसंव° B; 16) यक्षेति B; 17) °मपश्यस्ते C; 18) पृष्ठा B; 19) °दशाह C.

ज्ञाभिरिति द्वादशाहमुपसद्भिस्तेनैतावर्क्यर्कावाप्नोत्यथ[1] य-
द्द्वादशाहं[2] सुत्याभिस्तेनेदं महदुक्थमवाप्नोति[3] 'ते देवा
इहसमिवासुरूप[4] तं यज्ञक्रतुं[5] जानीमो यः सहस्रसंव-
त्सरस्य प्रतिमा' को हि तस्मै मनुष्यो यः सहस्रसंव-
त्सरेण यजेतेति[6] 'तत एतं पृष्ठ्यं[7] षडहं[8] द्वादशाहस्या-
ञ्जस्यमपश्यंस्ते[9] क्वेव स्तोमा भवन्ति तानि पृष्ठानि ता-
नि[10] शस्त्राणि 'ते देवा इहसामिवासुरूप[11] तं यज्ञक्रतुं[12]
जानीमो यः सहस्रसंवत्सरस्य प्रतिमा' को हि तस्मै
मनुष्यो यः सहस्रसंवत्सरेण यजेतेति' तत एतं विश्वजितं
पृष्ठ्यषडहस्याञ्जस्यमपश्यंस्ते[13] क्वेव स्तोमा भवन्ति[14]
तानि पृष्ठानि तानि[15] शस्त्राणि' ते देवा इहसामिवा-
सुरूप[16] तं यज्ञक्रतुं[17] जानीमो यः सहस्रसंवत्सरस्य प्र-
तिमा[18]' को हि तस्मै मनुष्यो यः सहस्रसंवत्सरेण
यजेतेति' स वा एष विश्वजिद्यः सहस्रसंवत्सरस्य प्रतिमैष
ह प्रजानां प्रजापतिर्यद्विश्वजिदिति ब्राह्मणम्' ॥ १० ॥

1) °न्यर्काप्नोत्यथ A; °न्यार्कावाप्नोत्यथ C; 2) °दशहं C; 3) महदुक्थ° A und C; महदुक्था° B; 4) ? ?; 5) °क्रतु E; 6) यजेति B; 7) पृष्ठ्यः B; पृष्ठ E; 8) षडह् C; 9) °पश्यस्ते E; 10) Fehlt in E; 11) ? ?; °सुरूप E; 12) °क्रतु E; 13) °मपश्यस्ते B und C; 14) भवति B; 15) E fügt स्त ein; 16) ? ?; °सुरूप E; 17) °क्रतु E; 18) प्रति E.

पुरुषं ह वै नारायणं प्रजापतिरुवाच यजस्व[1] यजस्वेति ' स होवाच यजस्व यजस्वेत्येवं हात्थ मा ' त्रिरपि[2] जत[2] मे वसवः प्रातःसवनेनागू रुद्रा माध्यंदिनसवनेनादित्यास्तृतीयसवनेन[3] ' यज्ञवास्तुन्येव[4] पर्यशिषो यज्ञवास्तुमित्येवमाशिषो[5] ऽहं वा एतद्वेद यज्ञे[6] वसवः प्रातःसवनेनागू रुद्रा माध्यंदिनसवनेनादित्यास्तृतीयसवनेन[7] यज्ञवास्तुन्येव पर्यशिषो यज्ञवास्तुमित्येवमाशिषो[8] विद्वांसो नूनं त्वा याजयेयुरेते[9] ह वा अविद्वांसो यत्रानृग्विद्धोता भवत्ययजुर्विदध्वर्युरसामविदुद्गाताभृग्वङ्गिरोविद्ब्रह्मा[10] ' यजस्वैव हन्त तु ते तद्वक्ष्यामि ' यथा सूत्रे मणारिव सूत्रमेतान्युक्थाहानि भवन्ति सूत्रमिव वा मणाविति ' तस्माद्य एव सर्ववित्स्यात्तं ब्रह्माणं कुर्वीतैष ह[11] वै विद्वांत्सर्वविद्ब्रह्मा यद्भृग्वङ्गिरोविदेते[12] ह वा अस्य सर्वस्य शमयितारः[13] पालयितारस्तस्माद्ब्रह्मा[14] स्तुते[15] बहिःपवमाने वाचयति ' ॥ ११ ॥

---

1) यक्ष्व E; 2) ?, त्रिरयक्षते A und C; त्रिरजयिते B; त्रिरजते D; Mit Ś. Br. XII 3. 4. 1. zu lesen यजस्वेति वाव त्वं मामात्थ त्रिरयक्षि वसवः u.s.w.; 3) So corr.; die hss. माध्यंदिने सवने आदित्यास्तृतीयसवने; 4) यज्ञवास्तुं न्येव B und C; 5) यज्ञवसु° B; 6) यते A, E und D; यन्ते C; 7) Vgl. 3; 8) °माशिषौ B; 9) यायतेयुरेते C; 10) भवन्त्यय° B; भवत्ययजुर्विदमेध्व° C; भवत्ययजुर्वेदमध्व° E; 11) Fehlt in E; 12) य भृग्वङ्गि° B; °रोविधेते C; °रोविदेयेते E; 13) समैतारः C; शमेयितारः E; 14) °स्तस्माद्ब्राह्मा C; °तार तस्मा E; 15) स्तुते B.

श्येनो ऽसि गायत्रछन्दा ' अनु त्वारभे ' स्वस्ति मा संपारयेति ' स यदाह[1] श्येनो ऽसीति सोमं वा एतदाहैष ह वा अग्निर्भूत्वास्मिंल्लोके[2] संशाययति[3] ' तद्यत्संशाययति[4] तस्माच्छ्येनस्तच्छ्येनस्य श्येनत्वं[5] ' स यदाह गायत्रछन्दा अनुत्वारभ इति गायत्रेण छन्दसा वसुभिर्देवैः[6] प्रातःसवने ऽस्मिंल्लोके ऽग्निं सत्वमन्वारभते[7] ' स यदाह स्वस्ति मा संपारयेति गायत्रेणैव छन्दसा वसुभिर्देवैः प्रातःसवने ऽस्मिंल्लोके ऽग्निना देवेन स्वस्ति मा[8] संपारयेति गायत्रेणैवैनं तच्छन्दसा[9] वसुभिर्देवैः प्रातःसवने ऽस्मिंल्लोके ऽग्निना देवेन स्वस्ति संपद्यते य एवं वेद ' ॥ १२ ॥

अथ माध्यंदिने पवमाने वाचयति सम्राडसि त्रिष्टुप्छन्दा[10] ' अनु त्वारभे ' स्वस्ति मा संपारयेति ' स यदाह सम्राडसीति[11] सोमं वा एतदाहैष ह वै वायुर्भूत्वान्तरिक्षलोके[12] सम्राजति[13] ' तद्यत्सम्राजति[14] तस्मात्सम्राट्तत्सम्राजस्य सम्राट्त्वं ' स यदाह त्रिष्टुप्छन्दा[15] अनु त्वारभ इति

1) यदा E; 2) °त्वा अस्मिंल्लोके A und E; 3) संश्र्यायति A; संशारयेति सदाश्र्यायति B; संशापयति C; संश्र्याति E; 4) So corr.; die hss. °श्र्याययति; 5) श्रयेनधं B; 6) वसुर्भि° A; 7) °रभेते A pr. m.; 8) Fehlt in B, C und E; 9) तच्छन्दंसा B; 10) त्रिष्टुभछन्दा B; त्रिष्टुपछन्दा C; 11) संम्यडसीति B; 12) °रिक्षं° B; 13) सम्राज्ञिति E; 14) तद्यत्संभ्राज्ञति E; B fügt ein: तद्यात्सम्राडसीति; 15) त्रिष्टपछन्दा B.

त्रैष्टुभेन[1] छन्दसा रुद्रैर्देवैर्माध्यंदिने सवने ऽन्तरिक्षलोके वायुं[2] सन्तमन्वारभते ' स यदाह[3] स्वस्ति मा संपारयेति[4] त्रैष्टुभेनैव छन्दसा रुद्रैर्देवैर्माध्यंदिने सवने अन्तरिक्षलोके वायुना[5] देवेन[5] स्वस्ति मा संपारयेति ' त्रैष्टुभेनैवैनं[6] तच्छन्दसा[6] रुद्रैर्देवैर्माध्यंदिने सवने अन्तरिक्षलोके वायुना देवेन स्वस्ति[7] संपद्यते य एवं वेद ' ॥ १३ ॥

अथार्भवे पवमाने वाचयति स्वरो ऽसि गयो ऽसि जगच्छन्दा ' अनु त्वारभे ' स्वस्ति मा[8] संपारयेति ' स यदाह स्वरो ऽसीति सोमं वा एतदाहैष ह वै सूर्यो भूत्वामुष्मिंल्लोके स्वरति[9] ' तद्यत्स्वरति तस्मात्स्वरस्तत्स्वरस्य[10] स्वरत्वं[11] ' स यदाह गयो ऽसीति सोमं[12] वा एतदाहैष ह वै चन्द्रमा भूत्वा[13] सर्वांल्लोकान्गच्छति[14] ' तद्यद्गच्छति तस्माद्गयस्तद्गयस्य[15] गयत्वं ' स यदाह जगच्छन्दा अनु त्वारभ इति जागतेन छन्दसादित्यैर्देवैस्तृतीयसवने ऽमुष्मिंल्लोके सूर्यं सन्तमन्वारभते ' स यदाह स्वस्ति

---

1) त्रिष्टुभेन E; 2) वायु B und C; 3) दाह B; 4) °रयति B; 5) B hat: वायु सन्तमन्वारभते सदाह; 6) वैनं तच्च् fehlt in B; 7) B fügt ein संपारयेति त्रैष्टुभेनैवैनं तच्छन्दसा रुद्रैर्देवैर्माध्यंदिने सवने अन्तरिक्षलोके वायुना देवेन स्वस्ति; 8) म B; 9) स्यरति B; 10) तस्मात्स्वरतत्स्व° A; तस्मात्स्वरतस्वरस्य C; 11) स्वरस्यत्वं C; 12) सोम B; 13) भूत्वां B; 14) E fügt व ein; 15) तस्माद्गयास्त° C; °स्तद्गयस्त E.

मा संपारयेति जागतेनैव[1] छन्दसादित्यैर्देवैस्तृतीयसवने ऽमुष्मिंल्लोके सूर्येण देवेन स्वस्ति मा[2] संपारयेति जागतेनैवैनं तच्छन्दसादित्यैर्देवैस्तृतीयसवने ऽमुष्मिंल्लोके सूर्येण देवेन स्वस्ति संपद्यते य एवं वेद ' ॥ १४ ॥

अथ संस्थिते संस्थिते सवने वाचयति[3] मयि भर्गो[4] मयि[5] महो मयि[6] यशो मयि सर्वमिति ' पृथिव्येव भर्गो ऽन्तरिक्ष एव[7] महो द्यौरेव यशो ऽप एव सर्वमग्निरेव भर्गो वायुरेव[8] मह आदित्या[9] एव यशश्चन्द्रमा एव सर्वं ' वसव एव भर्गो रुद्रा एव मह आदित्या[9] एव यशो विश्वेदेवा एव सर्वं ' गायत्र्येव भर्गस्त्रिष्टुबेव महो जगत्येव यशो ऽनुष्टुबेव सर्वं ' प्राच्येव भर्गः प्रतीच्येव मह उदीच्येव[10] यशो दक्षिणैव सर्वं ' वसन्त[11] एव भर्गो ग्रीष्म एव महो वर्षा एव यशः शरदेव सर्वं ' त्रिवृदेव भर्गः पञ्चदश[12] एव महः सप्तदश एव यश एकविंश एव सर्वमृग्वेद एव भर्गो यजुर्वेद एव महः सामवेद[13] एव यशो[14] ब्रह्मवेद एव सर्वं ' होतैव भर्गो ऽध्वर्युरेव

1) °नैवं C; °नैवैत E; 2) मा fehlt in C; von मा bis संपद्यते fehlt in B und E; 3) E fügt मयति ein; 4) भिर्गो A; 5) य E; 6) माय्ये E; 7) E fügt च ein; 8) °रेवम B; 9) आदित्य E; 10) उदीचित्र C; 11) वसेत E; 12) पञ्चदशा B; 13) सामावेदा E; 14) E fügt एव ein.

मह उद्गातेव यशो ब्रह्मैव सर्वं' वागेव भर्गः प्राण एव महश्चक्षुरेव यशो मन एव सर्वम्' ॥ १५ ॥

स यदाह मयि भर्ग[1] इति पृथिवीमेवैतल्लोकानामाहाग्निं[2] देवानां वसून्देवान्देवगणानां[3] गायत्रं छन्दसां प्राचीं दिशां वसन्तमृतूनां[4] त्रिवृतं स्तोमानामृग्वेदं वेदानां हौत्रं[5] होत्रकाणां[6] वाचमिन्द्रियाणाम्[7] ॥ १६ ॥

स यदाह मयि मह[8] इत्यन्तरिक्षमेवैतल्लोकानामाह वायुं देवानां रुद्रान्देवान्देवगणानां त्रैष्टुभं छन्दसां[9] प्रतीचीं दिशां ग्रीष्ममृतूनां पञ्चदशं[10] स्तोमानां यजुर्वेदं[11] वेदानामाध्वर्यवं होत्रकाणां प्राणमिन्द्रियाणाम्[12] ॥ १७ ॥

स यदाह मयि यश इति दिवमेवैतल्लोकानामाहादित्यं देवानामादित्यान्देवान्देवगणानां[13] जागतं छन्दसामुदीचीं[14] दिशां वर्षा ऋतूनां[15] सप्तदशं स्तोमानां सामवेदं वेदानामौद्गात्रं होत्रकाणां चक्षुरिन्द्रियाणाम्' ॥ १८ ॥

स यदाह मयि सर्वमित्यप एवैतल्लोकानामाह[16] च-

---

1) भर्गा A pr. m.; 2) °माहाग्नि E; 3) वासुन्दे° C; वसूदे° B; 4) °मृतुनां B; 5) Fehlt in B; 6) होत्रकाणां B; 7) वाचमिद्रियाणाम् E; 8) महे B; 9) छन्दंसां E; 10) पञ्चदशां C; 11) यजुर् E; 12) प्राणमिद्रि° E; 13) °गणाना E; 14) छदसां मुदीचीं B; 15) ऋतूना E; 16) °कानां माह C.

न्द्रमसं देवानां विश्वान्देवान्देवगणानामानुष्टुभं[1] छन्दसां दक्षिणां दिशां शरदमृतूनामेकविंशं[2] स्तोमानां ब्रह्मवेदं वेदानां ब्रह्मत्वं होत्रकाणां मन इन्द्रियाणाम् ' ॥ १९ ॥

स वा[3] एष दशधा चतुः संपद्यते ' दश च ह वै चतुर्विराजो ऽक्षराणि[4] ' तं गर्भा उपजीवन्ति[5] ' श्रीर्वै विराड्यशो[6] ऽन्नाद्यं[7] ' श्रियमेव तद्विराजं[8] यशस्यन्नाद्ये प्रतिष्ठापयति ' प्रतिष्ठन्तीरिदं[9] सर्वमनुप्रतिष्ठति ' प्रतितिष्ठति प्रजया पशुभिर्य एवं वेद ' ॥ २० ॥

अनर्वाणं[10] ह वै देवं[11] दध्यङ्ङाङ्गिरस[12] उपसीदं[13] ह यज्ञस्य शुष्टिं[14] समश्नवामहा इति ' स दध्यङ्ङाङ्गिरसो[15] ऽब्रवीद्यो वै सप्तदशं प्रजापतिं यज्ञे ऽन्वितं वेद नास्य यज्ञो रिष्यते ' न यज्ञपतिं[16] रिष्यन्त[16] इति ' ता वा एताः पञ्च व्याहृतयो भवन्त्यो श्रावयास्तु श्रौषडाज येयजामहे वौषडिति ' स दध्यङ्ङाङ्गिरसो[17] ऽब्रवीन्न वयं विद्मो यदि ब्राह्मणाः स्मो यद्यब्राह्मणाः स्मो यदि तस्यर्षेः

1) °नामः नष्टुभं B; °ष्टुभ E; 2) शरमृतू° B; 3) एवा C und E; 4) ऽक्षराणी B; 5) °जीवति E; 6) विराड्याशो A, C und E; 7) ऽन्नाद्यां C; 8) तद्विज E; 9) ? ? प्रतिष्ठन्तिरिदं B; 10) अथर्वाणं A pr. m.; 11) वं B; 12) So corr.; दध्यङाङ्गिरसम् die hss.; 13) Corrupt; 14) स्पुष्टि A; स्पुष्टीं B; सुष्टिं E; श्रुष्टि D; 15) So corr.; die hss. दध्यङाङ्गि°; 16) ? ?; vielleicht यज्ञपती रिष्यत ?; 17) So corr.; die hss. दध्यङाङ्गिरसो .

स्मो वान्यस्येत्यंनर्वाणाश्च[1] ह वा ऋतावन्तश्च[2] पितरः स्वधायामावृषायन्त[3] वयं वदामहे वयं वदामहा[4] इति' ते ऽयात्स्वायंभुवो[5] वा[5] ऋतावन्तो[5] मदयातां[5] न[5] वयं[5] वदामहा[5] इति' तस्मात्प्रवरे प्रव्रियमाणे[6] वाचयेद्देवाः पितर इति तिस्रो' य इति संयजति[7] स भवति यश्च[8] न ब्रूते यश्च[9] न ब्रूत इति ब्राह्मणम्' ॥ २१ ॥

सावित्रं ह स्मैतं[10] पूर्वं पुरस्तात्पशुमालभन्त इत्येतर्हि[11] प्राजापत्यं' यो ह्येव सविता स प्रजापतिरिति वदन्तस्तस्माद् समुप्याग्नींस्तेन[12] यजेरंस्ते समानधिष्ण्या इव स्युरोखासंभरणीयाया[13]' उखासंभरणीयायां विन्युप्याग्नींस्तया[14] यजेरंस्ते नानाधिष्ण्या इव स्युरा दीक्षणीयाया[15]' दीक्षणीयायां संन्युप्याग्नींस्तया[16] यजेरंस्ते समानधिष्ण्या[17] इव स्युरोदवसानीयाया[18]' उदवसानीयायां विन्युप्याग्नींस्तया यजेरंस्ते नानाधिष्ण्या इव स्युरथ यदि यजमानस्योपतपेत्यार्थतो ऽग्नीनाधाय तावदासीत[19] या-

---

1) नान्य° ed. B. Ind.; 2) ऋतावन्यश्च B; ततावन्तश्च E; 3) °यायन्तं B; 4) वमहां E; 5) ? ? A und C मद्देयातां; E मद्यातां; 6) प्रव्रीय: माणो B; 7) यजति B; 8) यस्य C; यस्त्वत्र E; 9) यस्य C; यस्य E; 10) स्म वैतं A, C und E; वैतं B; 11) So corr.; die hss. इति मेतर्हि; 12) So corr.; die hss. समोप्या°; 13) स्युसेखासं A; स्युखेपां सं° B; स्युरेयासं° C; स्युरोया° E; 14) °स्तेन C; 15) Fehlt in B und E; 16) °स्तेन A, B und E; 17) सामानधिष्ण्या E; 18) स्युरेद° B; 19) तावदासीत्र A.

वदगदः[1] स्याद्यदि प्रेयात्स्वैरेव[2] तमग्निभिर्दहेद्दशवाग्नि-भिरितरे[3] यजमाना[4] आसत इति वदन्तस्तस्य तदेव ब्राह्मणं यददः पुरःसवने 'पितृमेध[5] आशिषो व्याख्याताः' ॥ २२ ॥

सायंप्रातर्होमौ स्थालीपाको नवश्च[6] यः ।
बलिश्च पितृयज्ञश्चाष्टका[7] सप्तमः पशुः ॥
इत्येते पाकयज्ञाः[8] '

अग्न्याधेयमग्निहोत्रं पौर्णमास्यमावास्ये ।
नवेष्टिश्चातुर्मास्यानि[9] पशुबन्धो ऽत्र सप्तमः ॥
इत्येते हविर्यज्ञाः'

अग्निष्टोमो ऽत्यग्निष्टोम उक्थ्यः षोडशिमांस्ततः ।
वाजपेयो ऽतिरात्रश्चाप्तोर्यामात्र सप्तमः ॥
इत्येते सुत्याः'

के स्विद्देवाः प्रवोवाजाः के स्विद्देवा अभिद्यवः ।
के स्विद्देवा हविष्मन्तः किं स्विज्जिगाति सुम्नयुः ॥
ऋतव एव प्रवोवाजा[10] मासा देवा अभिद्यवः ।

1) So corr.; die hss. गात्रद्गध; 2) प्रेवाद्यासोत्स्वैरेव B; प्रेयात्सैरेव C; 3) °भिर्देहेद° B; °भिर्देहेद्दश वा ग्नि° A, C und E; 4) यज्ञमान A, C und E; 5) पितृमेधा B; 6) नभश्च C; 7) पिश्चयज्ञ° A und E; पितृयज्ञस्याष्टका C; 8) पाकंयज्ञाः B; पाकयज्ञः C; 9) °तुर्मास्यानि A und E; 10) °वाजोज्ञा A und B.

अर्धमासा कविष्मन्तस्तज्जिगाति[1] सुम्नयुः ॥
कति स्विद्रात्रयः कत्यहानि कति स्तोत्राणि कति शस्त्राण्यस्य[2] ।
कति स्वित्सवनाः संवत्सरस्य स्तोत्रियाः पदाक्षराणि कत्यस्य ॥
द्वावतिरात्रौ षड्ग्रतमग्निष्टोमा[3] द्वे[4] विंशतिशते उक्थ्यानां ।
द्वादश षोडशिनः षष्टिः[5] षडहा वैषुवतं[6] च ॥
अहान्यस्य विंशतिशतानि त्रीण्यहश्चैकं तावदस्य ।
संवत्सरस्य सवनाः सहस्रमसीति त्रीणि च संस्तुतस्य[7] ॥
षड्वष्टिश्च द्वे च शते भवत स्तुतशस्त्राणामयुतं[8] चैकमस्य ।
स्तोत्रियाश्च नवतिसहस्रा[9] द्वे नियुते नवतिश्चाति[10] षड्व[11] ॥
अष्टौ शतान्ययुतानि त्रिंशच्चतुर्नवतिश्च पदान्यस्य[12] ।
संवत्सरस्य कविभिर्मितस्यैतावती मध्यमा देवमात्रा ॥
अयुतमेकं प्रयुतानि त्रिंशद्द्वे नियुते तथा[13] ह्यनुसृष्टाः[13] ।
अष्टौ शतानि नव चाक्षराण्येतावानात्मा परमः प्रजापतेः ॥

---

1) So corr.; °स्तांस्त्रिलग्राति A; °स्ता स्त्रितिगाति C; °स्तां स्त्वंतिगाति B; °स्तांस्तिगाति E; 2) Von शस्त्रा° bis रात्री fehlt in B; 3) षड्ग्रात° B; 4) द्वा E; 5) पृष्टिः A; 6) विषुवतं B; 7) संस्तनस्य E; 8) °णामयुःकं B; 9) नवतिंस° C und E; नवतीस° A; 10) °श्चाधि A; °श्चाति C; 11) षड्व C; षडे E; 12) पत्रां न्यस E; 13) तस्याम्नुनुसृष्टा: E.

आद्यं वषट्कारः प्रदानान्तमेतमग्निष्टोमे[1] पर्वशः[2] साधु
कृतम् ।
सौभेषजं छन्द ईप्सन्यदग्नौ[3] चतुःशतं बहुधा हूयते यत् ॥
प्रातःसवन स्तुत एकविंशो गायत्रस्तोममित एक एव ।
माध्यंदिनः सप्तदशेन कृतस्त्रयस्त्रिंशेन सवनं तृतीयम् ॥
॥ २३ ॥

श्रद्धायां रेतस्तपसा तपस्वी वैश्वानरः सिषिचे ऽपत्यमी-
प्सन् ।
ततो जज्ञे[4] लोकजित्सोमजम्भा[5] ऋषेर्ऋषिरङ्गिराः संबभूव ॥
ऋषेर्यज्ञस्य चतुर्विधस्य[6] श्रद्धां[7] यः श्रेयसीं लोकममुं जिगाय ।
यस्मै वेदाः प्रसृताः सोमबिन्दु[8] युक्ता वहन्ति सुकृतामु
लोकम् ॥

ऋचो ऽस्य भागांश्चतुरो वहन्त्युक्थशस्त्रैः प्रमुदो मोदमानाः ।
ग्रहैर्हविर्भिश्च कृताकृतश्च यजूंषि[9] भागांश्चतुरो वहन्ति ॥
औदुम्बर्यां सामघोषेण तावत्सविष्टुतिभिश्च स्तोमैः छन्द-
सा[10] ।
सामानि भागांश्चतुरो वहन्ति गीत्या स्तोमेन सह प्र-
स्तावेन[11] च ॥

---

1) °ष्टोमेन C; 2) प्रवर्तश्च: C; 3) इत्तंत्यचध्मौ B; 4) यज्ञो B; यज्ञे A und E; 5) °त्सोमलंतंभा B; 6) °र्विदस्य C; 7) श्रद्धा C; 8) °विन्दुं A; 9) यज्ञूंषी B; यजूषि E; 10) इन्द C; 11) प्रस्यावेन C.

प्रायश्चित्तैर्भेषजैः संस्तुवन्तो ऽथर्वाणो ऽङ्गिरसश्च शान्ताः ।
ब्रह्मा ब्रह्मत्वेन प्रमुदो मोदमाना असंसृष्टान्भागांश्चतुरो[1] वहन्ति ॥
यो ब्रह्मवित्सो[2] ऽभिकरो ऽस्तु वः शिवो धिया[3] धीरो[4] रक्षतु धर्ममितम्[5] ।
मा वः प्रमत्ताममृताच्च यज्ञात्कर्माच्च[6] येनानङ्गिरसो[7] ऽपियासीत्[8] ॥
मायुं[9] दशं[10] मारुशस्ताः प्रमिष्ठा मा मे भूर्युक्ता[11] विदह्याथ लोकान् ।
दिव्यं भयं[12] रक्षत धर्ममुद्यतं[13] यज्ञं कालाश स्तुतिगोपनायनम्[14] ॥
होता च मैत्रावरुणश्च पादमच्छावाकः सह ग्रावस्तुतैकम्[15] ।
ऋग्भि स्तुवन्तो ऽहरहः पृथिव्या[16] अग्निं पादं ब्रह्मणा[17] धारयन्ति ॥

---

1) असंसृष्टा प्रागोश्चतुरो E; 2) ब्रह्मभिः सो C; 3) धीया A pr. m.; 4) धीयो C; 5) धर्ममितां C; 6) ? ?; °त्कर्मस B; 7) °ङ्गिरासा B; 8) ऽपियासीत C; 9) मायु C; 10) दिशं A; दिशां B; 11) So corr.; die hss. भूर्मुक्ता; 12) भगां A pr. m. und B; 13) °मुयन्त E; 14) °गापतायनं A, C und E; 15) ग्रावस्तुतैकम् C; ग्रावस्तुत्रेक E; 16) पृथिव्यां B; 17) ब्राह्मणा C.

अध्वर्युः प्रतिप्रस्थाता[1] नेष्टोन्नेता निहितं पादमेकम् ।
समन्तरिक्षं यजुषा स्तुवन्तो[2] वायुं पादं ब्रह्मणा धारयन्ति ॥
साम्नोद्गाता ह्रादयन्नप्रमत्त औदुम्बर्यां[3] स्तोभदियः[4] सगद्गदः ।
विद्वान्प्रस्तोता विदहाय[5] सुष्टुतिं सुब्रह्मण्यः प्रतिहर्ताय[6] यज्ञे ॥
साम्ना दिव्येकं निहितं स्तुवन्तः सूर्यं पादं ब्रह्मणा धारयन्ति ।
ब्रह्मा हैकं[7] ब्राह्मणाच्छंसिनः सह पोताग्नीध्रो निहितं पादमेकम् ॥
अथर्वभिरङ्गिरोभिश्च गुप्तो ऽप्सु[8] चन्द्रं पादं ब्रह्मणा धारयन्ति[9] ।
षोडशिकं होत्रका अभिष्टुवन्ति वेदेषु युक्ताः प्रपृथक्चतुर्धा[10] ॥
मनीषिणो दीक्षिताः श्रद्धाना[11] होतारो गुप्ता अभिवहन्ति[12] यज्ञम् ।
दक्षिणातो ब्रह्मणास्यों[13] जनदित्येतां व्याहृतिं जपन् ॥

---

1) प्रस्ताता B; 2) स्तुवतो B; 3) °ध्वर्या C; 4) स्तोमदेयः E; 5) Sic!; 6) °हर्तान्न A pr. m., B und E; 7) हैक E; 8) सु E; 9) धारयति B; 10) पृथक्चतुर्धा B; प्रगक्चतुर्धा C und E; 11) अठधाना B; 12) अभिवहन्ति A; 13) So corr. nach Bloomfield (Ved. Conc.) ब्रह्मणान्या A und C; ब्रह्मणोस्यां B; ब्रह्मणास्यात् E.

सप्तदशं सदस्यं तं कीर्तयन्ति पुरा[1] विदुः ।
अष्टादशी दीक्षिता दीक्षितानां यज्ञे पत्नी श्रद्धानेह[2] युक्ता ॥
एकोनविंशः शमिता बभूव विंशो[3] यज्ञे गृहपतिरेव[4] सुन्वन् ।
एकविंशतिरेवैषां संस्थायामङ्गिरो वह[5] ॥
वेदैरभिष्टुतो लोको नानाविशापराजितः ।	॥ २४ ॥
सप्त सुत्याःसप्त च पाकयज्ञाः[6] हविर्यज्ञाः सप्त तथैकविंशतिः ।
सर्वे ते यज्ञा अङ्गिरसो ऽपियन्ति[7] नूतना यानृषयो सृजन्ति[8] ये च सृष्टाः पुराणैः ॥
एतेषु वेदेष्वपि चैकमेवापत्रजमृत्विजां संभरन्ति ।
कृट्टयात्सचते[9] तामशस्तिं[10] विष्कन्धमेनं विसृतं प्रजासु ॥
निवर्तन्ति दक्षिणा नीयमानाः सुते सोमे वितते यज्ञतन्त्रे[11] ।
मोघाशिषो यन्त्यनिवर्तमाना अनिष्टयज्ञा न तरन्ति लोकान् ॥

1) पुराष्टा B; 2) °नेय C; 3) विंशो C und E; 4) गृहपतिरिव A, B und E; 5) ह्व B; 6) यावयज्ञा C; पाव्यकयज्ञा E; 7) ऽपीयन्ति E; 8) सृजति B; 9) Corrupt; कृद्स्पिा° C; कृट्टियात्सवते E; 10) कामशस्तिं C; °शस्तं B und E; 11) यत्नं तन्त्रे E.

द्वादशवर्षं[1] ब्रह्मचर्यं पृथग्वेदेषु तत्स्मृतम् ।
एवं[2] व्यवस्थिता वेदाः[3] सर्व एव स्वकर्मसु ॥
सन्ति चैषां समानाः मन्त्राः कल्पाश्च ब्राह्मणानि च ।
व्यवस्थानं तु तत्सर्वं पृथग्वेदेषु तत्स्मृतम् ॥
ऋग्वेदस्य पृथिवी स्थानमन्तरिक्षस्थानो ऽध्वरः ।
द्यौ[4] स्थानं सामवेदस्यापो भृग्वङ्गिरसां स्मृतम् ॥
अग्निर्देवत[5] ऋग्वेदस्य यजुर्वेदो वायुदेवतः[6] ।
आदित्यः[7] सामवेदस्य चन्द्रमा वैद्युतश्च भृग्वङ्गिरसाम् ॥
त्रिवृत्स्तोम ऋग्वेदस्य[8] यजूंषि पञ्चदशेन सह जज्ञिरे ।
सप्तदशेन सामवेद एकविंशो ब्रह्मसंमितः ॥
वागध्यात्ममृग्वेदस्य[9] यजुषां प्राण उच्यते ।
चक्षुषी सामवेदस्य मनो भृग्वङ्गिरसां स्मृतम् ॥
ऋग्भिः सह गायत्रं जागतमाहुर्यजूंषि त्रैष्टुभेन सह जज्ञिरे ।
उष्णिक्ककुब्भ्यां भृग्वङ्गिरसो जगत्या[10] सामानि[11] कवयो वदन्ति ॥
ऋग्भिः पृथिवां[12] यजुषान्तरिक्षं[13] साम्ना दिवं लोकजित्सोमजम्भाः ।

---

1) °वर्षे B; 2) एव E; 3) वेदीः E; 4) द्यौः E; 5) अग्निर्देवता A; 6) वायुर्देवता A pr. m. und E; 7) आदित्याः E; 8) ऋग्वेदस E; 9) वागाध्या° E; 10) जागत्य C; 11) समानि C; 12) पृथिवी B und E; 13) °न्तरिक्ष E.

अथर्वभिरङ्गिरोभिश्च[1] गुप्तो यज्ञश्चतुष्पाद्दिवमुद्वहेत[2] ॥
ऋग्भिः सुशस्तो यजुषा[3] परिष्कृतः सविष्टुतः सामत्रि-
स्तोमजन्माः[4] ।
अथर्वभिरङ्गिरोभिश्च गुप्तो यज्ञश्चतुष्पाद्दिवमारुरोह ॥
ऋचो विद्वान्पृथिवीं वेद संप्रति यजूंषि विद्वान्बृहदन्त-
रिक्षम् ।
दिवं वेद सामगो यो[5] विपश्चित्सर्वांल्लोकान्यद्भृग्वङ्गि-
रोवित् ॥
यांश्च ग्रामे यांश्चारण्ये[6] जपन्ति मन्त्रान्नानार्थान्बहुधा ज-
नासः ।
सर्वे ते यज्ञा अङ्गिरसो ऽपियन्ति नूतना सा हि गति-
र्ब्रह्मणो[7] यावरार्ध्या ॥
त्रिविष्टपं त्रिदिवं नाकमुत्तमं तमेतया त्रय्या विपर्येति[8] ।
अत उत्तरे ब्रह्मलोका महान्तो ऽथर्वणामङ्गिरसां[9] च[9]
सा गतिः ॥
अथर्वणामङ्गिरसां[9] च[9] सा गतिरिति ब्राह्मणम् ॥ २५ ॥
॥ इत्यथर्ववेदे गोपथब्राह्मणपूर्वभागे पञ्चमः प्रपाठकः ॥
॥ इति पूर्वब्राह्मणं समाप्तम् ॥

1) अथर्वाभि° A, B und C; 2) So corr.; die hss. °मुद्वहेद्; 3) यजुष C; 4) सामत्रिस्तो° C; 5) Ed. B. Ind.; die hss. द्यो; 6) यांश्चरारण्ये C; 7) °ह्मणो A; 8) So corr.; die hss. विपयेति; 9) ऽथर्वणामङ्गिरसांश्च C.

॥ गोपथब्राह्मणोत्तरभागः ॥

अथ यद्ब्रह्मसदनात्तृणं निरस्यति शोधयत्येवैनं तदथोपविशतीदमहमर्वाग्वसोः सदने सीदामीत्यर्वाग्वसुर्ह[1] वै देवानां ब्रह्मा पराग्वसुरसुराणां[2] ' तमेवैतत्पूर्वं सादयत्यरिष्टं[3] यज्ञं[4] तनुतादित्यथोपविश्य[5] जपति बृहस्पतिर्ब्रह्मेति ' बृहस्पतिर्वा आङ्गिरसो देवानां ब्रह्मा ' तस्मिन्नेवैतदनुज्ञामिच्छति ' प्रणीतासु प्रणीयमानासु वाचं यच्छत्या हविष्कृत उद्वादनादेतद्धि यज्ञस्य द्वारं ' तदेतदशून्यं[6] करोतीष्टे च स्विष्टकृत्यानुयाजानां[7] प्रसवादित्येतद्धि[8] यज्ञस्य द्वितीयं द्वारं ' तदेवैतदशून्यं करोति ' यत्परिधयः परिधीयन्ते[9] यज्ञस्य गोपीथाय ' परिधीन्परिधत्ते यज्ञस्य सात्मत्वाय ' परिधीन्त्संमार्ष्टि[10] ' पुनात्येवैनांस्त्रिर्मध्यमं[11] ' त्रय इमे प्राणाः ' प्राणानेवाभिजयति ' त्रिर्दक्षिणार्ध्यं[12] ' त्रयो वै लोका[13] ' लोकानेवाभिजयति ' त्रिरुत्तरार्ध्यं[14] ' त्रयो वै देवलोका ' देवलोकानेवाभिजयति[15] ' त्रिरुपवा-

---

1) °सुर्व D; 2) यज्ञान्वसु° D; 3) सादयेत्य° A pr. m.; 4) यज्ञ E; 5) तनूनादित्यथोपविश्य E; 6) तद्दै एतद° D; 7) स्विष्टकृत्य° D; 8) °दित्येतत्त वै E; 9) परीधीयन्ते D; 10) परिधीत्सं° B und A sec. m.; 11) पुनात्येवैनांस्त्रि° F; 12) त्रिर्दक्षिणार्द्धं B, D, E und F; 13) लोका fehlt in E; 14) °त्तरार्द्धं B, D und F; त्रिरुत्तरार्द्धं E; 15) °जयेति A; °जयति D; °जयन्ति F.

जयति[1] ' त्रयो वै देवयानाः पन्थानस्तानेवाभिजयति ' ते वै द्वादश भवन्ति ' द्वादश ह वै मासाः संवत्सरः ' संवत्सरमेव तेन प्रीणात्यथो संवत्सरमेवास्मा[2] उपदधाति स्वर्गस्य लोकस्य समष्ट्यै[3] ' ॥ १ ॥

प्रजापतिर्वै रुद्रं[4] यज्ञान्निरभजत्सो[5] ऽकामयत ' मेयमस्मा आकूतिः समर्धि[6] यो मा यज्ञान्निरभाक्षीदिति ' स यज्ञमभ्यायम्याविध्यत्तदाविद्धं[7] निरकृन्तत्तत्प्राशित्रमभवत्तदुदयच्छत्तद्भगाय[8] पर्यहरंस्तत्प्रत्यैक्षत[9] ' तस्य चक्षुः परापतत्तस्मादाहुरन्धो वै भग इत्यपि ह[10] तं[10] नेच्छेयमिच्छति[10] ' तत्सवित्रे पर्यहरंस्तत्प्रत्यगृह्णात्तस्य[11] पाणी प्रचिच्छेद[12] ' तस्मै हिरण्मयौ प्रत्यदधुस्तस्माद्धिरण्यपाणिरिति[13] स्तुतस्तत्पूष्णे[14] पर्यहरंस्तत्प्राश्नात्तस्य दन्ताः परोप्यन्त ' तस्मादाहुरदन्तकः पूषा पिष्टभाजन इति ' तदिध्मायाङ्गिरसाय[15] पर्यहरंस्तत्प्राश्नात्तस्य शिरो व्यपतत्तं[16]

---

1) °जयन्ति F; 2) °वास्मान् F; 3) समष्टै D; 4) रुद्र D; 5) °भजात्सो A pr. m.; 6) So corr.; A समृध्यियों; die andere hss. समृद्धियों; 7) °विध्यं तदाविद्धं E; °विध्यतदाविद्धं F; °विध्यं D; 8) °च्छत-द्भगाय D und F; 9) So corr.; °त्प्रतीक्षेत A, B; °त्प्रतीक्ष्यत D; °त्प्रतीक्षत E; °त्प्रतीक्षित F; 10) हन्तेच्छेयमिच्छति A; ह तं ते छेयति B; 11) So B. Ind.; die hss. °त्प्रतिगृह्णात्तस्य; 12) So corr.; प्रतिच्छेद die hss.; 13) प्रत्यदधोस्त° D; प्रत्यदधस्त° F; 14) स्तुतस्ते पूष्णो B; 15) °तदिध्मं याङ्गिरसाय B; °य आङ्गिरसाय E; 16) व्यपततं A.

यज्ञ एवाकल्पयत्स[1] एष इध्मः ' समिधो ह पुरातनस्त-
द्बर्हय आङ्गिरसाय पर्यहरंस्तत्प्राश्नात्तस्याङ्गा[2] पर्वाणि
व्यस्रंसन्त[3] ' तं यज्ञ एवाकल्पयत्तदेतद्बर्हिः ' प्रस्तरो ह
पुरातनस्तद्बृहस्पतय आङ्गिरसाय पर्यहरंत्सो ऽबिभेद्बृह-
स्पतिरित्थं वाव[4] स्य[4] आर्तिमारिष्यतीति[4] ' स एतं
मन्त्रमपश्यत्सूर्यस्य त्वा चक्षुषा प्रतीक्ष[5] इत्यब्रवीन्न हि
सूर्यस्य[6] चक्षुः किं चन हिनस्ति ' सो ऽबिभेत्प्रतिगृह्णन्तं
मा हिंसिष्यतीति ' देवस्य त्वा सवितुः प्रसवे ऽश्विनोर्बा-
हुभ्यां पूष्णो हस्ताभ्यां प्रसूतः प्रशिषा प्रतिगृह्णामीत्य-
ब्रवीत्सवितृप्रसूत एवैनं तद्देवताभिः प्रत्यगृह्णात्तद्व्यूह्य[7]
तृणानि प्राग्दण्डं स्थण्डिले निदधाति पृथिव्यास्त्वा नाभौ
सादयामीति ' पृथिवी वा[8] अन्नानां[9] शमयित्री[10] ' तयै-
वैनच्छमयां चकार ' सो ऽबिभेत्प्राश्नन्तं मा हिंसिष्यतीत्य-
ग्नेष्ट्वास्येन प्राश्नामीत्यब्रवीन्न ह्यग्नेरास्यं किं चन हिनस्ति '
सो ऽबिभेत्प्राशितं मा हिंसिष्यतीतीन्द्रस्य[11] त्वा जठरे
सादयामीत्यब्रवीन्न हीन्द्रस्य जठरं किं चन हिनस्ति '

1) °ल्पयात्स A pr. m.; 2) ?; 3) So corr.; die hss. व्यश्रं°; 4) So corr. nach T. S. II 6. 8. 5. वामार्ति° A, B, D, F; वावार्ति° E; 5) प्रतिक्ष A und B; 6) सूर्य D; 7) प्रतिगृ° A, B und F; 8) वां A pr. m. B, C und E; 9) नां B; न्नानां E; 10) शमयत्री E; 11) °तितीन्द्रस्य A pr. m. und E.

वरुणस्योदर इति न हि वरुणस्योदरं किं चन हिन-स्तीति ' ॥ २ ॥

अथो आहुर्ब्राह्मणस्योदर इत्यात्मास्यात्मन्नात्मानं[1] मे[2] मा हिंसीः स्वाहेत्यन्नं वै सर्वेषां भूतानामात्मा ' तेनैवैनच्छमयां चकार ' प्राशितमनुमन्त्रयते[3] यो ऽग्निर्नृमणा नाम ब्राह्मणेषु प्रविष्टः । तस्मिन्म एतत्सुहुतमस्तु प्राशित्रं तन्मा मा[4] हिंसीत्परमे व्योमन्निति ' तत्सर्वेण ब्रह्मणा प्राश्नात्तत एनं नाहिनत्तस्माद्यो[5] ब्रह्मिष्ठः स्यात्तं ब्रह्माणं कुर्वीत[6] ' बृहस्पतिर्वै सर्वं ब्रह्म[7] ' सर्वेण[8] ह वा एतद्ब्रह्मणा यज्ञं दक्षिणत उद्यच्छते ' ऽप वा[9] एतस्मात्प्राणाः[10] क्रामन्ति य आविद्धं[11] प्राश्नात्यद्भिर्मार्जयित्वा प्राणान्संस्पृशते वाङ्म आस्यन्नित्यमृतं वै प्राणा ' अमृतमापः ' प्राणानेव यथास्थानमुपाह्वयते[12] ' तद्ध हैक आहुरिन्द्राय पर्यहरन्निति[13] ' ते देवा अब्रुवन्निन्द्रो[14] वै देवानामोजिष्ठो बलिष्ठस्तस्मा[15] एनत्परिहरतेति[16] ' तत्तस्मै[17] पर्यहरंस्तत्स[18] ब्रह्मणा शमयां चकार ' तस्माद-

---

1) इत्यात्मास्यात्मनात्मान B; °त्मान D; 2) Fehlt in F; 3) प्राशित्रम° B; 4) मां A; 5) °स्माद्यौ A pr. m.; 6) कुर्वित D; 7) ब्रह्मा E; ब्रह्मणा D; 8) Fehlt in D; 9) एवा F; 10) एतस्मात्प्राणाः A; 11) अविद्धं F; 12) यथास्थानुनमुपा° E; 13) °हरन्नीति A; 14) °न्निन्द्रौ E; 15) बालि° F; 16) So corr.; die hss. °हरन्तीति; 17) तं तस्मै E; 18) °रंस्ताच्छद्ब A pr. m.; °रंस्तत्सद्ब A sec. m. und F.

कुरिन्द्रो ब्रह्मेति ' यवमात्रं भवति ' यवमात्रं वै विषस्य [1] न हिनस्ति ' यदधस्तादभिघारयति [2] तस्मादधस्तात्प्रहरणं प्रज्ञा अरुर्न हिनस्ति ' यदुपरिष्टादभिघारयति तस्मादुपरिष्टात्प्रहरणं [3] प्रज्ञा अरुर्न हिनस्ति ' यदुभयतो ऽभिघारयत्युभयतो [4] ऽभिघारि [5] प्रज्ञा अरुर्घातुकं [6] स्याद्यत्समयाभिहरेदनभिविद्धं [7] यज्ञस्याभिविध्येत् [8] ' ॥ ३ ॥

अग्रेण परिहरति ' तीर्थेनैव परिहरति ' वि वा एतद्यज्ञश्छिद्यते यत्प्राशित्रं परिहरति ' यदाह ब्रह्मन्प्रस्थास्यामीति बृहस्पतिर्वै सर्वं ब्रह्म [9] ' सर्वेण ह वा एतद्ब्रह्मणा यज्ञं दक्षिणतः संदधात्यथो अत्र वा एतर्हि यज्ञः श्रितो यत्र ब्रह्मा तत्रैव यज्ञः श्रितस्तत एवैनमालभते ' यद्धस्तेन प्रमीवेद्वेपनः [10] स्याद्यच्छीर्ष्णा शीर्षक्तिमान्स्याद्यत्तूष्णीमासीतासंप्रत्तो [11] यज्ञः स्यात्प्रतिष्ठेत्येव ब्रूयाद्वाचि वै यज्ञः श्रितो ' यत्र ब्रह्मा यत्रैव [12] यज्ञः श्रितस्तत एवैनं संप्रयच्छत्यग्नीध [13] आदधात्यग्निमुखानेवर्तून्प्रीणात्यथोत्त-

---

1) Sic!; 2) °भिधारयति E; 3) °ष्टात्प्रत्यहरणं A pr. m. und F; 4) Fehlt in F; 5) ??; 6) अरुधा° A und F; अरुधारुक B; 7) °नुभिविद्धं D; 8) So corr.; die hss. °विठेत्; 9) ब्रह्मा E; 10) प्रमीयेद्वे° die hss.; 11) So corr.; die hss. °सीदासंप्रत्तो; D °सीदासंप्रतो; 12) So corr.; die hss. तत्रैव; 13) So corr.; °त्याग्नीध्र A, B, E und F; °त्यग्नीध्र D.

रासामाहुतीनां[1] प्रतिष्ठित्या' अथो समिद्वत्यव जुहोति' परिधीन्त्संमार्ष्टि' पुनात्येवैनान्त्सकृत्सकृत्संमार्ष्टि' पराङिव ह्येतर्हि यज्ञश्चतुः संपद्यते' ऽथो चतुष्पादः पशवः' पशूनामाप्त्यै' देव सवितरेतत्ते प्राहेत्याह प्रसूत्यै' बृहस्पतिर्ब्रह्मेत्याह' स हि ब्रह्मिष्ठः' स यज्ञं पाहि स यज्ञपतिं पाहि स मां पाहि स मां कर्मण्यं[2] पाहीत्याह' यज्ञाय च यजमानाय च पशूनामाप्त्यै' ॥ ४ ॥

न वै पौर्णमास्यां नामावास्यायां[3] दक्षिणा दीयन्ते' य एष ओदनः पच्यते दक्षिणैषा दीयते यज्ञस्यर्ध्या[4]' इष्टी वा एतेन यज्ञते ऽथो वा एतेन पूर्ती य एष ओदनः पच्यत' एष ह वा इष्टापूर्ती[5] य एनं पचति' ॥ ५ ॥

द्वया[6] वै देवा यजमानस्य गृहमागच्छन्ति सोमपा अन्ये ऽसोमपा अन्ये' हुतादो ऽन्ये ऽहुतादो ऽन्य' एते वै देवा अहुतादो यद्ब्राह्मणा' एतद्देवत्य एष यः पुरानीजान' एते ह वा एतस्य प्रजायाः पशूनामीशते' ते ऽस्याप्रीता[7] इषमूर्जमादायापक्रामन्ति' यदन्वाहार्यमन्वा-

1) °ग्निमख इवर्तू° B; 2) Fehlt in D; 3) नामावस्यायां D; 4) यज्ञस्याहूयो A sec. m. und F; 5) इष्टपूर्त्ती D; 6) द्वयो A; 7) ऽस्याः प्रीता E.

हरति तानेव तेन प्रीणाति ' दक्षिणतः सद्यः[1] परिहृत्वा आह[2] ' दक्षिणावतैव[3] यज्ञेन यजत ' आहुतिभिरेव देवान्हुतादः प्रीणाति दक्षिणाभिर्मनुष्यदेवांस्ते ऽस्मै प्रीता इषमूर्जं नियच्छन्ति ' ॥ ६ ॥

देवाश्च ह वा असुराश्चास्पर्धन्त[4] ' ते देवाः प्रजापतिमेवाभ्ययजन्तान्यो[5] ऽन्यस्यासन्नसुरा अजुहवुस्ते देवा एतमोदनमपश्यंस्तं प्रजापतये भागमनुनिरवपंस्तं[6] भागं पश्यन्प्रजापतिर्देवानुपावर्तत ' ततो देवा अभवन्परासुराः ' स य[7] एवं विद्वानेतमोदनं पचति भवत्यात्मना परास्याप्रियो भ्रातृव्यो भवति ' प्रजापतिर्वै देवेभ्यो भागधेयानि व्यकल्पयत्सो[8] ऽमन्यतात्मानमन्तरगामिति[9] ' स एतमोदनमभक्तमपश्यत्तमात्मने[10] भागं निरवपत्प्रजापतेर्वा एष भागो ' ऽपरिमितः स्यादपरिमितो हि प्रजापतिः ' प्रजापतेर्भागो ऽस्यूर्जस्वान्पयस्वानक्षितो ऽस्यक्षित्यै त्वा ' मा मे क्षेष्ठा अमुत्रामुष्मिंल्लोक इह[11] च ' प्राणापानौ मे पाहि ' समानव्यानौ[12] मे पाह्युदानरूपे मे पाह्यूर्गस्यूर्जं मे धेहि '

1) °सप्यः D; 2) आहा D; 3) So corr.; die hss. दक्षिणावृतैव; 4) असुराश्च° D; 5) प्रजापतिरेवा° A pr. m. und B; 6) °निरवैपैस्तं F; 7) Fehlt in D; 8) So corr.; die hss. त्सोमं; 9) So corr.; ऽमन्यत आत्मा° A sec. m.; B, D, E, F; alle hss. °न्तरगादिति; 10) अभक्तम् fehlt in D; 11) उह A; 12) समानौ A.

कुर्वतो मे मा क्षेष्ट ददतो मे मोपदसः[1] प्रजापतिमहं त्वया समक्षमृध्यासमिति[2] प्रजापतिमेव समक्षमृध्नोति[2] य एवं वेद य एवं वेद ॥ ७ ॥

ये वा इह यज्ञैरार्ध्नुवंस्तेषामेतानि ज्योतींषि यान्यमूनि नक्षत्राणि तन्नक्षत्राणां नक्षत्रत्वं यन्न क्षीयन्ति[3] दर्शपूर्णमासौ वै यज्ञस्यावसानदर्शौ ये वा अनिष्ट्वा दर्शपूर्णमासाभ्यां सोमेन यजन्ते[4] तेषामेतानि ज्योतींषि[5] यान्यमूनि नक्षत्राणि पतन्तीव तद्यथा ह वा इदमस्पष्टावसाने[6] नेहावसास्यसि[7] नेहावसास्यसीति नोनुद्यन्त एवं हैवैते[8] ऽमुष्माँल्लोकान्नोनुद्यन्ते त एते[9] प्रच्यवन्ते[10] ॥ ८ ॥

यस्य[11] हविर्निरुप्तं पुरस्ताच्चन्द्रमा अभ्युदियात्तांस्त्रेधा ताण्डुलान्विभजेद्ये मध्यमास्तानग्नये दात्रे ऽष्टाकपालं निर्वपेद्ये[12] स्थविष्ठास्तानिन्द्राय प्रदात्रे दधनि[13] चरुं ये क्षोदिष्ठास्तान्विष्णवे शिपिविष्टाय[14] शृते चरुं पशवो वा एते ऽतिरिच्यन्ते तानेवाप्नोति तानवरुन्द्धे ऽग्निर्वै

---

1) मोपद्मः B; 2) समृत्त° A, B, E und F; 3) So corr.; die hss. क्षियन्ति; 4) यजते A pr. m.; 5) ज्योतीषि D; 6) So corr.; इदमस्यष्टा° A, E und F; इदमस्याष्टा° B und D; 7) °स्यसी A, B und F; 8) ते D; 9) एवते D; 10) प्रच्यवते F; 11) यस्या D; 12) निर्वापेद्ये B; 13) दधति F; 14) शिपिविष्ट्यय D.

मध्यमस्य दातेन्द्रो वै ज्येष्ठस्य प्रदाता' यदेवेदं[1] क्षुद्रं पशूनां तद्विष्णोः शिपिविष्टं' तदेवाप्नोति' पशूनेवावरुन्द्धे' ॥ ९ ॥

या पूर्वा पौर्णमासी सानुमतिर्योत्तरा सा राका' या पूर्वामावास्या सा सिनीवाली[2] योत्तरा सा कुहूश्चन्द्रमा[3] एव धाता च[4] विधाता च' यत्पूर्णा ऽन्यां वसत्यपूर्णा[5] ऽन्यां[6] तन्मिथुनं' यत्पश्यत्यन्यां नान्यां तन्मिथुनं' यदमावास्यायाश्चन्द्रमा अधि प्रजायते तन्मिथुनं' तस्मादेवास्मै मिथुनात्पशून्प्रजनयति' ॥ १० ॥

न द्वे यजेत' यत्पूर्वया संप्रति यजेतोत्तरया छम्बट्कुर्याद्यंदुत्तरया[7] संप्रति यजेत पूर्वया छम्बट्कुर्यान्नेष्टिर्भवति न यज्ञस्तदनु ह्रीतमुख्यपगल्भो[8] जायत' एकामेव यजेत' प्रगल्भो हैव जायते' ऽनादृत्य[9] तद्वै यजेत' यज्ञमुखमेव पूर्वयालभते यजत उत्तरया' देवता एवं पूर्वयाप्नोतीन्द्रियमुत्तरया' देवलोकमेव पूर्वयावरुन्द्धे मनुष्यलोकमुत्तरया भूयसो यज्ञक्रतूनुपैत्येषा[10] ह वै सुमना[11] नामेष्टिर्यमद्ये-

1) यदेवेन्द्रं A; 2) शिनीवली D; 3) कुहः चन्द्रमा B; 4) Fehlt in D; 5) वर्स पूर्णो A; वसत्पूर्णो B, D und E; 6) ऽन्या F; 7) So corr.; die hss. छंवसट्कु°; 8) °मुख्यमुपगल्भो A; °मुख्यमपगल्भो B und E; ज्ञातमुखमयमल्पो D; 9) So corr. ऽनाहृत्यं A und E; ऽनादृत्यं B, D und F; 10) So corr.; die hss. यज्ञक्रतूनामुपै°; 11) सुम्ना E.

ज्ञानं[1] पश्चाच्चन्द्रमा अभ्युदियादस्मा[2] अस्मिंल्लोक[3] आर्धुकं भवति ' ॥ ११ ॥

अग्नाविष्णावमेकादशकपालं निर्वपेद्दर्शपूर्णमासावारिप्समाणो[4] 'ऽग्निर्वै सर्वा देवता विष्णुर्यज्ञो 'देवताश्चैव यज्ञं चारभत ऋद्ध्या 'ऋध्नोत्येवोभौ[5] सहारम्भावित्याहुरुदिन्नु[6] शृङ्गे सितो[7] मुच्यत इति ' दर्शो वा एतयोः पूर्वः पौर्णमास उत्तरो 'ऽथ यत्परस्तात्पौर्णमास आरभ्यते तद्यथा पूर्वं क्रियते ' तद्यत्पौर्णमासमारभमाणः[8] सरस्वत्यै चरुं निर्वपेत्सरस्वते द्वादशकपालममावास्या वै[9] सरस्वती पौर्णमासः सरस्वानित्युभावेवैनौ[10] सहारभत ऋद्ध्या 'ऋध्नोत्येव ' ॥ १२ ॥

अग्नये पथिकृतेऽष्टाकपालं निर्वपेद्यस्य[11] प्रज्ञातेष्टिरतिपद्यते[12] ' बहिष्पथं वा एष एति यस्य प्रज्ञातेष्टिरतिपद्यते[13] 'ऽग्निर्वै देवानां पथिकृत्तमेव[14] भागधेयेनोपासरत्स एनं पन्थानमपिनयत्यनड्वान्दक्षिणा[15] ' स हि पन्थानमभिवहति ' ॥ १३ ॥

---

1) So corr.; die hss. °मध्येयानं; ed. B. I. °मध्येयाने; 2) अभ्युदीया° A; 3) °ल्लोकं F; 4) °मापा B; 5) °वाभौ D; 6) °रुदिन्नु A, B, D und F; °रुदिरं E; 7) सृतो A pr. m.; श्रितो D; 8) °समा आरभ° A sec. m.; 9) वर्पा F; 10) सरस्वत्यु° A pr. m.; सरस्वानित्या° A sec. m.; 11) °घसा E; 12) So corr.; die hss. प्रज्ञातेष्टिरितिप°; 13) Vgl. 12; 14) पथिकृतमेव A und F; 15) पन्थामपि° A pr. m., B und E.

अग्नये व्रतपतये[1] ऽष्टाकपालं निर्वपेद्य आहिताग्निः सन्प्रवसेद्धंकु वा एष व्रतमतिपातयति य आहिताग्निः सन्प्रवसति व्रत्ये[2] ऽहनि स्त्रियं वोपैति मांसं वाश्नात्यग्निर्वै[3] देवानां व्रतपतिरग्निमेतस्य व्रतमगात्तस्मादेतस्य व्रतमालम्भयते । ॥ १४ ॥

अग्नये व्रतभृते[4] ऽष्टाकपालं निर्वपेद्य आहिताग्निरार्तिज्ञमश्रु[5] कुर्यादानीतो वा एष देवानां य आहिताग्निस्तस्मादेतेनाश्रु न कर्तव्यं । न हि देवा अश्रु कुर्वन्त्यग्निर्वै देवानां व्रतभृदग्निमेतस्य व्रतमगात्तस्मादेतस्य व्रतमालम्भयते । ॥ १५ ॥

ऐन्द्राग्नमुस्रमनुसृष्टमालभेत[6] यस्य पिता पितामहः सोमं न पिबेदिन्द्रियेण वा एष वीर्येण व्यृध्यते[7] यस्य पिता पितामहः सोमं न पिबति । यदैन्द्र[8] इन्द्रियेणैवैनं तद्वीर्येण समर्धयति । देवताभिर्वा एष वीर्येण[9] व्यृध्यते[7] यस्य पिता[10] पितामहः सोमं न पिबति । यदाग्नेयो ऽग्निर्वै सर्वा देवताः । सर्वाभिरेवैनं तद्देवताभिः समर्धयत्यनुसृष्टो भवत्यनुसृष्ट इव ह्येतस्य सोमपीथो यस्य पिता पितामहः

---

1) Fehlt in E; 2) प्रत्ये A; व्रते E; 3) वाभ्नात्य° F; 4) व्रते E; 5) °र्त्विज्ञमश्रु A, B, E und F; 6) So corr.; die hss. °मुत्स्नम°; 7) So corr.; die hss. विवृध्यते; 8) A, B, E und F fügen इन्द्र ein; 9) वीर्येणा A; 10) Fehlt in F.

सोमं न पिबति ' तस्मादेष एव तस्या देवतायाः पशूनां समृद्धः ' ॥ १६ ॥

देवा वा ओषधीषु पक्वास्वाजिमयुः[1] ' स[2] इन्द्रो ऽवेदग्निर्वाविमाः[3] प्रथम उज्जेष्यतीति ' सो ऽब्रवीद्यतरो[4] नौ पूर्व उज्जयात्तन्नौ सहेति ' ता[5] अग्निरुदजयत्तदिन्द्रो ऽनूदजयत्स[6] एष ऐन्द्राग्नः सन्नाग्नेन्द्र[7] ' एका वै तर्हि यवस्य श्रुष्टिरासीदेका[8] व्रीहेरेका[9] माषस्यैका[10] तिलस्य[11] ' तद्विश्वे देवा अब्रुवन्वयं वा एतत्प्रथयिष्यामो भागो नोऽस्त्विति ' तद्भूम एव वैश्वदेवो ' ऽथो प्रथयत्येतेनैव ' पयसि स्याद्विश्वदेवत्वाय ' वैश्वदेवं हि पयो[12] ' ऽथेमावब्रूतां[13] न वा ऋत आवाभ्यामेवैतद्यूयं प्रथयत मयि प्रतिष्ठितमसौ वृष्ट्या पचति नैतदितो[14] ऽभ्युज्जेष्यतीति ' भागो नावस्त्विति ' ताभ्यां वा एष भागः क्रियत उज्जित्या एवांथो प्रतिष्ठित्या एव यो[15] द्यावापृथिवीयः ' सौमीर्वा ओषधीः ' सोम ओषधीनामधिराजो ' याश्च ग्राम्या याश्चा-

---

1) °स्वाजिमयुः A, B, E und F; °स्वाजिषुः D; 2) सं D; 3) So corr.; die hss. ऽवेदाग्नि°; 4) °द्यतरा B; 5) ना B; 6) ऽनोदज° A pr. m.; ऽनुद° B; 7) °ग्नेन्द्रा E; 8) श्रुष्टि° D und F; 9) व्रहेरेका A und B; 10) माकस्यैका D; 11) तिलस्या A und B; 12) प A; 13) So corr.; die hss. ऽथेमे अब्रूतां; 14) नैतदिता D; 15) So corr.; die hss. य; ed. B. Ind. ये.

रण्यास्तासामेष उद्धारो यच्छ्यामाको[1] ' यच्छ्यामाकः सौम्यस्तमेव भागिनं कृणुते ' यदकृत्वाग्रयणं नवस्याश्नीयाद्देवानां भागं प्रतिक्लृप्तमद्यात्संवत्सराद्वा एतदधिप्रजायते यदाग्रयणं ' संवत्सरं वै ब्रह्मा ' तस्माद्ब्रह्मा[2] पुरस्ताद्धोमसंस्थितहोमेष्वावपेतैकहायनी दक्षिणा ' स हि संवत्सरस्य प्रतिमा ' रेत एव ह्येषो ऽप्रजातः[3] ' प्रजात्यै ' ॥ १७ ॥

अथ हैतदप्रतिरथमिन्द्रस्य बाहू स्थविरौ वृषाणावित्येतेन ह वा इन्द्रो ऽसुरानप्रत्यजयदप्रति ह भवत्येतेन[4] यजमानो भ्रातृव्यं जयति ' संग्रामे जुहुयादप्रति ह भवत्येतेन[5] ह[6] वै भरद्वाजः प्रतर्दनं समनह्यत्स राष्ट्र्यभवद्यं[7] कामयेत राष्ट्री स्यादिति तमेतेन संनह्येद्राष्ट्री ह भवत्येतेन ह वा इन्द्रो विराजमभ्यजयद्दशैवान्वाह[8] ' दशाक्षरा विराड्विराजं वा एतेन यजमानो भ्रातृव्यं वृङ्क्ते ' तदु हैक एकादशान्वाहुरेकादशाक्षरा[9] वै त्रिष्टुप्त्रैष्टुभो वज्रो ' वज्रेणैवैतद्रक्षांस्यपसेधति[10] ' दक्षिणतो वै देवानां यज्ञं रक्षांस्यजिघांसंस्तान्यप्रतिरथेनापाघ्नत[11] ' तस्माद्ब्रह्मा-

---

1) यच्छ्यामाको A pr. m., B, D und E; 2) Fehlt in E; 3) प्रजात्यः A pr. m.; 4) भवति interpolation; 5) भवति ? ?; 6) Fehlt in A sec. m., B und E; 7) यं ? ?; 8) So corr.; die hss. °श्रैतान्वाह; 9) एकादशान्वाहुर् fehlt in E; एकादशाद्वाहु° D; 10) °सेदति E; 11) °पाघ्न F.

प्रतिरथं जपन्नेति । यद्वेवाप्रतिरथं[1] जपन्नेति[1] यज्ञस्याभिजित्यै रक्षसामपहत्यै रक्षसामपहत्यै ॥ १८ ॥

अथातश्चातुर्मास्यानां[2] प्रयोगः । फाल्गुन्यां पौर्णमास्यां चातुर्मास्यानि प्रयुञ्जीत । मुखं वा एतत्संवत्सरस्य यत्फाल्गुनी पौर्णमासी मुखमुत्तरे फाल्गुन्यौ[3] पुच्छं पूर्वे । तद्यथा[4] प्रवृत्तस्यान्तौ समेतौ स्यातामिवमेवैतत्संवत्सरस्यान्तौ समेतौ भवतस्तद्यत्फाल्गुन्यां[5] पौर्णमास्यां चातुर्मास्यैर्यजते मुखत एवैतत्संवत्सरं प्रयुङ्क्ते । ऽथो[6] भैषज्ययज्ञा[7] वा एते यच्चातुर्मास्यानि[8] । तस्मादृतुसंधिषु प्रयुज्यन्त । ऋतुसंधिषु[9] वै व्याधिर्जायते । तान्येतान्यष्टौ हवींषि भवन्त्यष्टौ वै चतसृणां पौर्णमासीनां हवींषि[10] भवन्ति । चतसृणां वै पौर्णमासीनां वैश्वदेवं समासो[11] । ऽथ यदग्निं मन्थन्ति प्रजापतिर्वै वैश्वदेवं । प्रजात्या[12] एवांथैतं देवं गर्भं प्रजनयत्यथ यत्सप्तदश सामिधेन्यः सप्तदशो वै प्रजापतिः । प्रजापतेराप्त्या । अथ यत्सद्वन्तावाज्यभागावसिसंतीति[13] वै सद्वन्तौ भवतो । ऽथ यद्विराजौ संयाज्ये अन्नं वै श्रीर्विराडन्नाद्यस्य श्रियो ऽवरुद्धा । ऽथ यन्नव प्रयाजा[14]

---

1) Fehlt in E; 2) Zweimal in A, B, E und F; 3) फल्गुन्यौ A sec. m. und B; 4) Fehlt in D; 5) °ल्गुन्या B; 6) थ्रो E; 7) भेषज्य° F; 8) °मास्यनि B; 9) कृतु° B; 10) हवींषी E; 11) समस्तो A pr. m.; 12) प्रजपत्या A pr. m. und B; 13) Sic! 14) प्रयाज D.

नवानुयाजा अष्टौ हवींषि वाजिनं नवमं तन्नक्षत्रीयां[1) विराजमाप्नोत्यथो आहुर्दशनीं विराजमिति प्रयाजानुयाजा हवींष्याघारावाज्यभागाविति[2)' ॥ १९ ॥

अथ यदग्नीषोमौ[3) प्रथमं देवतानां यजत्यग्नीषोमौ वै देवानां मुखं' मुखत एव तद्देवान्प्रीणात्यथ यत्सवितारं यजत्यसौ वै सविता यो ऽसौ तपत्येतमेव तेन प्रीणात्यथ यत्सरस्वतीं यजति वाग्वै सरस्वती' वाचमेतेन प्रीणात्यथ यत्पूषणं यजत्यसौ वै पूषा यो ऽसौ तपत्येतमेव तेन प्रीणात्यथ यन्मरुतः स्वतवसो[4) यजति घोरा वै मरुतः स्वतवसस्तानेव तेन प्रीणात्यथ यद्विश्वान्देवान्यजत्येते वै विश्वे देवा यत्सर्वे देवास्तानेव तेन प्रीणात्यथ यद्द्यावापृथिव्यौ यजति प्रतिष्ठे वै द्यावापृथिव्यौ' प्रतिष्ठित्या एवाथ यद्वाजिनो यजति पशवो वै वाजिनः' पशूनेव तेन प्रीणात्यथो ऋतवो वै वाजिन' ऋतूनेव तेन प्रीणात्यथो छन्दांसि वै वाजिनश्छन्दांस्येव तेन प्रीणात्यथो देवाश्वा वै वाजिनो' ऽत्र देवाः साश्वा अभीष्टाः प्रीता[5) भवन्त्यथ यत्परस्तात्पौर्णमासेन यजते तथा ह्यस्य पूर्वपक्षे वैश्वदेवेनेष्टं भवति' ॥ २० ॥

---

1) So corr.; तन्नाक्षरीयां A, D, E und F; तन्नाक्षश्रीयां B; 2) हवींस्यां द्वारा° D; हवीस्याधारा° E; 3) यदग्नि° A pr. m.; 4) स्वंतोवसो A pr. m.; स्वन्तवसो A sec. m.; स्वतोवसो F; 5) प्रीत्या D.

वैश्वदेवेन वै प्रजापतिः प्रजा असृजत ' ताः सृष्टा[1] अप्रसूता वरुणस्य[2] यवाञ्जक्षुस्ता[3] वरुणो वरुणपाशैः प्रत्यबध्नात्ताः प्रजाः[4] प्रजापतिं पितरमेत्योपावदन्नुप[5] तं यज्ञक्रतुं जानीहि येनेष्ट्वा वरुणमप्रीणात्स[6] प्रीतो[6] वरुणो[6] 'वरुणपाशेभ्यः[7] सर्वस्माच्च[8] पाप्मनः[9] संप्रमुच्यन्त[10] इति ' तत एतं प्रजापतिर्यज्ञक्रतुमपश्यद्वरुणप्रघासांस्तमाहरत्तेनायजत[11] ' तेनेष्ट्वा वरुणमप्रीणात्स प्रीतो वरुणो वरुणपाशेभ्यः सर्वस्माच्च[12] पाप्मनः प्रजाः प्रामुञ्चत्प्र ह[13] वा एतस्य प्रजा वरुणपाशेभ्यः सर्वस्माच्च पाप्मनो मुच्यन्ते[14] ' य एवं वेदाथ यदग्निं प्रणयन्ति यमेवामुं वैश्वदेवे मन्थन्ति[15] तमेव तत्प्रणयन्ति[16] ' यन्मथ्यते तस्योक्तं ब्राह्मणमथ यत्सप्तदश सामिधेन्यः सद्वन्तावाज्यभागौ विराजौ संयाज्ये तेषामुक्तं ब्राह्मणमथ यन्नव प्रयाजा नवानुयाजा नवैतानि हवींषि ' समानानि त्वेव पञ्च संचराणि[17] हवींषि भवन्ति[18] पौष्णान्तानि ' तेषामुक्तं ब्राह्मणम् ' ॥ २१ ॥

---

1) सृष्ट्वा D; 2) वरुणास्यां B; 3) यवां चक्षुस्ता A, D, E, F; यवां चतक्षुस्ता B; 4) Fehlt in B; 5) पितरमेत्या° D; 6) Interpolation!; 7) वरुण fehlt in D; 8) So corr.; die hss. सर्वस्मात्; 9) पाप्मानः A pr. m.; 10) Von संप्र° bis प्रजाः fehlt in B; 11) So corr.; die hss. प्रजापतिं यज्ञक्रतुमपश्यद्वरुणप्रघासं तमा°; 12) सर्वस्मात् E; 13) Fehlt in D; 14) मुह्यते B; मुच्यते E; 15) मथति E; 16) तत्प्रयन्ति D; 17) संवत्सराणि B; 18) भवति E.

अथ यदैन्द्राग्नो[1] द्वादशकपालो[2] भवति बलं वै तेज इन्द्राग्नी ' बलमेव तत्तेजसि प्रतिष्ठापयत्यंथ[3] यद्वारुण्यामीक्षेन्द्रो वै वरुणः ' स उ वै पयोभाजनस्तस्माद्वारुण्यमिक्षांथ[4] यन्मारुती पयस्याप्सु वै मरुतः श्रित ' आपो हि पयो[5] ' ऽथेन्द्रस्य[6] वै मरुतः[7] श्रित[8] ऐन्द्रं पयस्तस्मान्मारुती पयस्यांथ यत्काय एककपालः प्रजापतिर्वै कः ' प्रजापतेराप्त्या ' अथो सुखस्य वा एतन्नामधेयं कमिति ' सुखमेव तदध्यात्मन्धत्ते ' ऽथ यन्मिथुनौ गावौ ददाति[9] तत्प्रजात्यै ऋषभमुंक्ष्या[10] वाजिनो ' ऽथ यदप्सु वरुणं[11] यजति[12] स्व एवैनं तदायतने प्रीणात्यंथ[13] यत्परस्तात्पौर्णमासेन यजते तथा ह्यस्य पूर्वपक्षे वरुणप्रघासैरिष्टं भवति ' ॥ २२ ॥

ऐन्द्रो वा एष यज्ञक्रतुर्यत्साकमेधास्तंयथा[14] महाराजः पुरस्तात्सेनानीकानि[15] व्युह्याभयं पन्थानमन्वियादेवमेवैतत्पुरस्ताद्देवता यजति[16] ' तद्यथैवादः सोमस्य महाव्रतमेवमेवैतदिष्टिमहाव्रतमंथ यदग्निमनीकवन्तं प्रथमं दे-

---

1) यदैन्द्राग्न्यो A sec. m.; यदैन्द्राग्नौ D, 2) °वालौ D; 3) °पयपथ D; 4) पयोभाजि° D und E; 5) यथो D; 6) ऽथेन्द्रस्या A; 7) मारुत D; 8) Interpolation?; 9) दधाति A; 10) Man erwartet °मुक्षो; 11) वरुणा E; 12) जयति D; 13) प्रीणाथ B; 14) °त्साकामेधा° D; 15) So corr.; die hss. पुरस्तात्सेना°; 16) So corr.; die hss. यजन्ते.

वतानां यजत्यग्निर्वै देवानां मुखं । मुखत एव तद्देवान्प्रीणात्यथ यन्मध्यंदिने मरुतः सांतपनान्यजतीन्द्रो[1] वै मरुतः[2] सांतपना[3] । ऐन्द्रं माध्यंदिनं[4] । तस्मादेतानिन्द्रेणोपसंहितान्यजत्यथ[5] यत्सायं गृहमेधीयेन चरन्ति[6] पुष्टिकर्म वै गृहमेधीयः । सायं पोषः पशूनां । तस्मात्सायं गृहमेधीयेन चरन्त्यथ यच्छ्वो[7] भूते गृहमेधीयस्य निष्काशमिश्रेण पूर्णदर्वेण[8] चरन्ति पूर्वेद्युः कर्मणैवैतत्प्रातः कर्मोपसंतन्वन्त्यथ यत्प्रातर्मरुतः[9] क्रीडिनो यजतीन्द्रो[10] वै मरुतः क्रीडिनस्तस्मादेनानिन्द्रेणोपसंहितान्यजत्यथ यदग्निं प्रणयन्ति यमेवामुं वैश्वदेवे मन्थन्ति तमेव तत्प्रणयन्ति । यन्मथ्यते तस्योक्तं ब्राह्मणमथ यत्सप्तदश सामिधेन्यः सद्वन्तावाज्यभागौ[11] विराजौ संयाज्ये तेषामुक्तं ब्राह्मणमथ यन्नव प्रयाजा नवानुयाजा अष्टौ हवींषि समानानि[12] त्वेव[13] षडुत्तराणि हवींषि भवन्त्यैन्द्राग्नान्तानि । तेषामुक्तं ब्राह्मणमथ यन्महेन्द्रमन्ततो यजत्यन्तं[14] वै श्रेष्ठी भजते । तस्मादेनमन्ततो यजत्यथ यद्वैश्वकर्मण[15]

1) °न्यजन्तीन्द्रो A, B und E; 2) मरुः E; 3) सान्तपनी F; 4) मध्यं° D; 5) तस्मादेतानिद्रेणासहिता° D; 6) चरति E; 7) यच्छ्वो B; 8) So corr.; पूणादर्व्या A sec. m. und B; पूर्स्यादर्व्या D; पूर्णादर्व्यां E; पूर्णादर्व्या A pr. m. und F; 9) °र्महत् F; 10) यजन्तीन्द्रो D; 11) यद्वन्तावा° D; 12) सामानानि A pr. m.; 13) वव D; 14) यजन्हेत्यन्त B; 15) यद्विश्व° D.

एककपालो ऽसौ[1] वै विश्वकर्मा यो ऽसौ तपत्यैतमेव तेन प्रीणात्यथ[2] यदृषभं[3] ददात्यैन्द्रो[4] ह यज्ञक्रतुः। ॥ २३ ॥

अथ यदपराह्णे पितृयज्ञेन चरन्त्यपराह्णभाजो वै पितरस्तस्मादपराह्णे पितृयज्ञेन चरन्ति। तदाहुर्यदपरपक्षभाजो[5] वै पितरः कस्माद्देनान्पूर्वपक्षे यजन्तीति। देवा वा[6] एते पितरस्तस्माद्देनान्पूर्वपक्षे[7] यजन्तीत्यथ यदेकां सामिधेनीं[8] त्रिरन्वाह सकृदु ह वै पितरस्तस्मादेकां सामिधेनीं त्रिरन्वाहाथ यद्यजमानस्यार्षेयं[9] नाह[9] नेद्यजमानं प्रवृणजानीत्यथ[10] यत्सोमं पितृमन्तं[11] पितॄन्वा सोमवतः पितॄन्बर्हिषदः[12] पितॄनग्निष्वात्तानित्यावाहयति[13]। न[14] हैके स्वं[15] महिमानमावाहयन्ति[16] यजमानस्यैष महिमेति वदन्त[17] आवाहयेदिति त्वेव स्थितमग्नेर्ह्येष महिमा भवत्यथो[18] स्वधेत्याश्रावयत्यस्तु स्वधेति प्रत्याश्रावयति। स्वधाकारो[19] हि पितॄणामथ यत्प्रयाजा-

---

1) यो D; 2) प्रीणीत्यथ E; 3) यदूषभं गां A und D; यदूषभगां B; यदूषभंगा E; 4) आददात्यैन्द्रो F; 5) तदाहुर्वैदपर° D; तदाहुर्यदापक्षभाजो E; 6) या E; 7) °देवान्पूर्वपक्षे B; 8) यामिधनीं D; सामिधेनी B; 9) So corr.; die hss. °नस्यार्षे ऽन्वाह; 10) So corr.; die hss. प्रमृण°; 11) पितृवन्तं A, B, D und F; 12) पितॄन्वार्हिषदः E; 13) Hier fehlen einige Worte; 14) ना B; 15) स्वं A pr. m. und B; 16) °ह्यति E; 17) वदत E; 18) भवन्त्यों A und F; भवन्त्यो E; 19) स्वधाकरो D.

नुयाजेभ्यो बर्हिष्मन्तावुद्धरति[1] प्रजा वै बर्हिर्नेत्प्रजां[2] पितृषु दधानीति ' ते वै षट्सम्पद्यन्ते[3] ' षड्वा ऋतव ' ऋतवः पितरः[4] ' पितॄणामाप्त्यै ' ॥ २४ ॥

अथ यज्जीवनवन्तावाज्यभागौ भवतो यजमानमेव तज्जीवयत्यथ[5] यदेकैकस्य[6] हविषस्तिस्रस्तिस्रो[7] याज्या भवन्ति[8] ह्वयत्येवैनान्प्रथमया ' द्वितीयया गमयति ' प्रैव[9] तृतीयया यच्छत्यथो[10] देवयज्ञमेवैतत्पितृयज्ञेन[11] व्यावर्तयत्यथो दक्षिणासंस्थो वै पितृयज्ञस्तमेवैतदुदक्संस्थं कुर्वन्त्यथ यदग्निं कव्यवाहनमन्ततो यजत्येतत्स्विष्टकृतो वै पितरस्तस्मादग्निं कव्यवाहनमन्ततो यजत्यथ यदिडामुपहूयावघ्राय[12] न प्राश्नन्ति पशवो वा इडा ' नेत्पशून्प्रवृणजानीत्यथ[13] यत्सूक्तवाके यजमानस्याशिषो[14] ऽन्वाह नेद्यजमानं प्रवृणजानीत्यथ[15] यत्पत्नीं न संयाजयन्ति[16] नेत्पत्नीं[17] प्रवृणजानीत्यथ[18] यत्पवित्रवति[19] मार्जयन्ते

---

1) °न्तावुरतिं E; 2) °त्प्रजा E; 3) षट्सं fehlt in D; 4) Fehlt in D; 5) So corr.; °वयते ऽथ A und F; °वयतो ऽथ B, D und E; 6) यादाकैकस्य D; 7) तिस्रो fehlt in B; 8) भवति D; 9) त्रैव A; 10) गच्छ° A; 11) So corr.; die hss. एवैतं; 12) यदिडां रूप° D; यदिडामुपहृणाया° B; °मुपहूयं° D; °मुपह्या° E; 13) So corr.; die hss. °न्प्रमृणाजानी°; 14) °स्यार्थे B; 15) So corr.; die hss. प्रमृणा°; 16) °जयन्तेति F; 17) नेत् fehlt in F; 18) So corr.; die hss. प्रमृणा°; 19) °त्रवती A pr. m.

शान्तिर्वै भेषजमापः[1] ' शान्तिरेवैषा[2] भेषजमन्ततो यज्ञे क्रियते ' ऽथ यदध्वर्युः पितृभ्यो निपृणाति जीवानेव तत्पितॄननु[3] मनुष्याः पितरो ऽनुप्रवहन्त्यथो देवयज्ञमेवैनं[4] पितृयज्ञेन[4] व्यावर्तयन्त्यथो दक्षिणासंस्थो वै पितृयज्ञस्तमेवैतदुदक्संस्थं[5] कुर्वन्त्यथ यत्प्राञ्चो ऽभ्युत्क्रम्यादित्यमुपतिष्ठन्ते देवलोको वा आदित्यः ' पितृलोकः पितरो ' देवलोकमेवैतत्पितृलोकादुपसंक्रामन्तीत्यथ[6] यद्दक्षिणाञ्चो ऽभ्युत्क्रम्याग्नीनुपतिष्ठन्ते[7] प्रीत्यैव तद्देवेष्वन्ततो ऽर्धं[8] चरन्त्यथ यदुदञ्चो[9] ऽभ्युत्क्रम्य[10] त्र्यंबकैर्यजन्ते[11] रुद्रमेव तत्स्वायां[12] दिशि प्रीणन्त्यथो देवयज्ञमेवैतत्पितृयज्ञेन[13] व्यावर्तयन्त्यथो दक्षिणासंस्थो वै पितृयज्ञस्तमेवैतदुदक्संस्थं[14] कुर्वन्त्यथ यदन्तत आदित्येष्ट्या यजतीयं[15] वा अदितिरस्यामेवैनमन्ततः[16] प्रतिष्ठापयत्यथ यत्परस्तात्पौर्णमासेन यजते तथा हास्य पूर्वपक्षे साकमेधैरिष्टं भवति ' ॥ २५ ॥

त्रयोदशं वा एतं मासमाप्नोति यच्छुनासीर्येण यजत[17] '

---

1) °जमायाः B; 2) °वैषां A, B, E und F; 3) तत्पित्रेननु A pr. m.; 4) दवयज्ञेन D; 5) °दुदक्सेंस्थं A; °दुदकसंस्थं B; 6) So corr.; die hss. एवैनं; 7) °तिष्ठते E; 8) ऽर्ध्वं D; 9) °दञ्चा F; 10) ऽभ्युत्क्रम्या D; 11) त्रैयंबकिर्यजते D; 12) So corr.; die hss. तत्स्वस्यां; 13) Vid. 8. 14) °दुदकसंस्थं B; 15) यजन्तीयं B; 16) आदि° D; 17) कृत D.

एतावान्वै संवत्सरो यावानेष[1] त्रयोदशो मासो' ऽथ यदग्निं प्रणयन्ति यमेवामुं वैश्वदेवे[2] मन्थन्ति तमेव तत्प्रणयन्ति' यन्मथ्यते तस्योक्तं ब्राह्मणं' यद्यु न मथ्यते पौर्णमासमेव तन्त्रं भवति' प्रतिष्ठा वै पौर्णमासं' प्रतिष्ठित्या एवाथ यद्वायुं यजति प्राणो[3] वै वायुः' प्राणमेव तेन प्रीणात्यथ यच्छुनासीरं यजति संवत्सरो वै शुनासीरः' संवत्सरमेव तेन प्रीणात्यथ यत्सूर्यं यजत्यसौ वै सूर्यो यो ऽसौ तपत्येतमेव[4] तेन प्रीणात्यथ[5] यच्छ्वेतां[6] दक्षिणां[6] ददात्येतस्यैव[7] तद्रूपं क्रियते' ऽथ यत्प्रायश्चित्तप्रतिनिधिं[8] कुर्वन्ति स्वस्त्ययनमेव तत्कुर्वन्ति' यज्ञस्यैव शान्तिर्यजमानस्य भैषज्याय' तैर्वा एतैश्चातुर्मास्यैर्देवाः सर्वान्कामानाप्नुवंत्सर्वा इष्टीः सर्वममृतत्वं' स वा एष प्रजापतिः[9] संवत्सरश्चतुर्विंशो[9] यच्चातुर्मास्यानि' तस्य मुखमेव वैश्वदेवं' बाहू वरुणप्रघासाः[10]' प्राणो ऽपानो व्यान इत्येतास्तिस्र इष्टय' आत्मा महाहविः' प्रतिष्ठा शुनासीरं[11]' स वा एष प्रजापतिरेव संवत्सरो यच्चातुर्मास्यानि[12]' सर्वं वै प्रजापतिः' सर्वं चातुर्मास्यानि' तत्स-

1) यावानेव F; 2) विश्वेदेवे D; 3) प्राणा F; 4) तपत्ये° D; 5) प्रीणात्यय E; 6) So corr.; die hss. यच्छ्वेता दक्षिणा; 7) ददात्ये° E; 8) °श्चित्तं प्रति° A; °श्चित्त: प्रति° B und E; 9) °पतिश्चातुर्विंशो E; 10) °प्र-घासा: A pr. m.; °प्रधास्सा: D; 11) शुनीरं D; 12) यश्चातु° D.

त्रैणीव सर्वमाप्नोति य एवं वेद[1] यश्चैवं विद्वांश्चातुर्मास्यैर्यजते चातुर्मास्यैर्यजते ' ॥ २६ ॥

॥ इत्यथर्ववेदे गोपथब्राह्मणोत्तरभागे प्रथमः प्रपाठकः ॥

---

ओं मांसीयन्ति[2] वा आहिताग्नेरग्नयस्तं एतमेवाग्रे ऽभिध्यायन्ति यजमानं[3] ' य एतमैन्द्राग्नं पशुं षष्ठे षष्ठे मास आलभते तेनैवेन्द्राग्निभ्यां ग्रसितमात्मानं निरवदयत ' आयुष्काम[4] आलभेत[4] ' प्राणापानौ वा इन्द्राग्नी[5] ' प्राणापानावेवात्मनि धत्त ' आयुष्मान्भवति ' प्रजाकाम आलभेत[6] ' प्राणापानौ वा इन्द्राग्नी ' प्राणापानौ प्रजा अनुप्रजायन्ते ' प्रजावान्भवति ' पशुकाम आलभेत ' प्राणापानौ वा इन्द्राग्नी ' प्राणापानौ पशवो ऽनुप्रजायन्ते ' पशुमान्भवति ' यामं शुकहरितमालभेत[7] शुण्ठं[8] वा यः कामयेतानामयः पितृलोके स्यामित्येतेन ह वै यमो ऽमुष्मिंल्लोक आर्ध्नोत्पितृलोक एवार्ध्नोति ' त्वाष्ट्रं वडवमालभेत प्रजाकामः ' प्रजापतिर्वै प्रजाः सिसृक्षमाणः[9] स द्वितीयं

---

1) वेदे A; 2) °सियन्ति A pr. m.; 3) Hier fehlen einige Worten; 4) आयुष्कामालभेत A und B; 5) इन्द्राग्नी D; 6) आलभते D; 7) So corr.; die hss. शुकं हरि°; शुकं हरितमालभेत D; 8) So corr.; die hss. शुठं; 9) So corr.; die hss. समृज°.

मिथुनं[1] नाविन्दत्स[1] त्वाष्ट्रं वडवमपश्यत्त्वष्टा[2] हि रूपाणां प्रजनयिता' तेन प्रजा असृजत' तेन मिथुनमविन्दत्प्रजावान्मिथुनवान्भवति य एवं वेद यश्चैवं विद्वानेतमालभते' योनीन्वा एष काम्यान्पशूनालभते[3] यो ऽनिष्ट्वैन्द्राग्नेन काम्यं पशुमालभत[4] इष्ट्वालम्भः समृद्ध्यै' ॥ १ ॥

पञ्चधा वै देवा व्युदक्रामन्नग्निर्वसुभिः सोमो रुद्रैरिन्द्रो मरुद्भिर्वरुण आदित्यैर्बृहस्पतिर्विश्वैर्देवैस्ते देवा अब्रुवन्नसुरेभ्यो वा इदं भ्रातृव्येभ्यो रध्यामो[5] यन्मिथो विप्रियाः[6] स्मो' या न इमाः प्रियास्तन्वस्ताः समवद्यामहा इति' ताः समवाद्यन्त' ताभ्यः स[7] निर्ऋच्छाद्यो नः प्रथमो ऽन्यो[8] ऽन्यस्मै द्रुह्यादिति' यत्तन्वः समवाद्यन्त तत्तानूनप्त्रस्य[9] तानूनप्त्रत्वं' ततो देवा अभवन्परासुरास्तस्माद्यः सतानूनप्त्रिणां[10] प्रथमो द्रुह्यति स आर्तिमार्छति' यत्तानूनप्त्रं समवद्यति भ्रातृव्याभिभूत्यै' भवत्यात्मना[11] परास्याप्रियो भ्रातृव्यो भवति' ॥ २ ॥

पञ्च कृत्वो ऽवद्यति' पाङ्क्तो यज्ञः' पञ्चधा हि ते ताः

---

1) So corr.; die hss. °थुनमन्वावि°; 2) वडवप्रपश्य° B; 3) °न्पश्पुमालभते A und E; 4) °लभन्त A pr. m., B, D und E; 5) So corr.; die hss. रुध्यामो; 6) So corr.; die hss. विभ्रिया; 7) सं A, D, E und F; सन् B; 8) Fehlt in D; 9) Fehlt in F; 10) So corr.; die hss. तानून°; 11) °त्मनो A pr. m.

समवाद्यन्तांपतये त्वा[1] गृह्णामीत्याह ' प्राणो वा आपतिः ' प्राणमेव तेन प्रीणाति ' परिपतये त्वेत्याह[2] ' मनो वै परिपतिर्मन एव[3] तेन[3] प्रीणाति ' तनूनप्त्र इत्याह ' तन्वो हि ते ताः समवाद्यन्त ' शाक्वरायेत्याह ' शक्यै[4] हि ते ताः समवाद्यन्त ' शक्मन[5] ओजिष्ठायेत्याहौजिष्ठं[6] हि ते तदात्मनः समवाद्यन्तानाधृष्टमित्याहानाधृष्टं[7] ह्येतदनाधृष्यमित्याहानाधृष्यं[8] ह्येतद्देवानामोज इत्याह ' देवानां[9] ह्येतदोजो ' ऽभिशस्तिपा इत्याहाभिशस्तिपा[10] ह्येतदनभिशस्तेन्यमित्याहानभिशस्तेनं[11] ह्येतदनु मे दीक्षां दीक्षापतिर्मन्यतामनु[12] तपस्तपस्पतिरञ्जसा सत्यमुपगेषं[13] स्विते[14] मा[15] धा इत्याह ' यथायजुरेवैतत् ' ॥ ३ ॥

घृतं वै देवा वज्रं[16] कृत्वा सोममघ्नन्त्स्रुचौ[17] बाहू ' तस्मात्स्रुचौ सौमीमाहुतिं नाशाते[18] ' अवधीयेत सोमस्तस्मात्स्रुचौ चाऽज्यं चान्तिकमाहार्षीदन्तिकमिव[19] खलु

---

1) व्रा D; 2) च त्याह् D; 3) एतेन E; 4) So corr.; शक्त्यं A, B, E und F; शक्तिं D; 5) शक्मन् F; 6) जिष्ठाये° B; 7) °दूष्टमित्या° A pr. m. und E; 8) °नादूष्यमित्याहानादूष्यं E; 8) Von °आधृष्यं bis ऽभिशस्ति° fehlt in B; 9) देवानं E; 10) °स्तिपां A sec. m.; 11) °स्त्येनं A; 12) दित्ताप° A pr. m.; 13) Die hss °गेषां; 14) स्वीते A pr. m.; स्वेते A sec. m.; 15) मां F; 16) वद्रं D; 17) सोममग्नं स्रुचौ A; सोममग्नंत्सुचौ B; सोममघ्नांत्सुचौ E; सोममग्रंस्रुचौ F; 18) So corr.; die hss. नासाते; 19) चान्तिकमहा° D.

वा अस्यैतत्प्रचरन्ति[1] यत्तानूनप्त्रेण प्रचरन्त्यंशुरंशुष्टे देव सोमाप्यायतामिन्द्रायैकधनविद इत्याह ' यदेवास्यापवायते यन्मीयते[2] तदेवास्यैतेनाप्याययन्त्यां तुभ्यमिन्द्रः प्यायतामा त्वमिन्द्राय[3] प्यायस्वेत्याहोभावेवेन्द्रं च सोमं चाप्याययन्त्याप्याययास्मान्त्सखीन्त्सन्या मेधया प्रजया धनेनेत्याहर्त्विजो वा एतस्य[4] सखायस्तानेवास्यैतेनाप्याययन्ति ' स्वस्ति ते[5] देव सोम सुत्यामुदृचमशीयेत्याहाशिषमेवैतामाशास्ते ' प्र[6] वा एतस्माल्लोकाच्यवन्ते[7] ये सोममाप्याययन्त्यन्तरिक्षदेवत्यो[8] हि सोम आप्यायित[9] ' एष्टा राय एष्टा वामानि प्रेषे[10] भगाय ' ऋतमृतवादिभ्यो[11] नमो दिवे नमः पृथिव्या इति ' द्यावापृथिवीभ्यामेव नमस्कृत्यास्मिंल्लोके प्रतितिष्ठति प्रतितिष्ठति ' ॥ ४ ॥

मख इत्येतद्यज्ञनामधेयं[12] छिद्रप्रतिषेधसामर्थ्याच्छिद्रं खमित्युक्तं[13] ' तस्य मेति प्रतिषेधो ' मा यज्ञं छिद्रं करिष्यतीति[14] ' छिद्रो हि यज्ञो भिन्न इवोदधिर्विस्रवति ' तद्धि

---

1) आस्यैत° B und E; 2) Fehlt in F; 3) त्वमिन्द्राय A, E und F; 4) Von एतस्य bis एतस्मा° fehlt in B; 5) Fehlt in A und F; 6) A sec. m., D und F fügen इ ein; 7) °वते A; 8) °न्तरिक्षेदेवत्यो A, D, E und F; 9) °यत A sec. m., B, D, E und F; 10) प्रैषे A pr. m.; प्रेषाय F; 11) तमृतवा° A; ऋतष्टवादिभ्यो D; 12) इत्येतद्यज्ञं नाम° F; 13) स्वमि° F; 14) °ष्यतिति A pr. m.

खलु छिद्रं भवत्यृत्विग्यजमानविमानाद्वापि वैषां व्यपेक्षया मन्त्रकल्पब्राह्मणानामप्रयोगाद्यथोक्तानां वा दक्षिणानामप्रदानाद्धीनाद्वातिरिक्ताद्वोत्पाताद्भुतेषु प्रायश्चित्तव्यतिक्रमादित्यैतद्वै सर्वं ब्रह्मण्यर्पितं[1] ' ब्रह्मैव विद्वान्यद्भृग्वङ्गिरोवित्सम्यगधीयानश्चरितब्रह्मचर्यो[2] ऽन्यूनानतिरिक्ताङ्गो[3] ऽप्रमत्तो यज्ञं रक्षति ' तस्य प्रमादाद्यदि वाप्यसांनिध्याद्यथा भिन्ना नौरगाधे महत्युदके संप्लवेन्मत्स्यकच्छपशिंशुमारनक्रमकरपुरीकयक्षरक्षसपिशाचानां[4] भागधेयं भवत्येवमादीनां चान्येषां विनष्टोपजीविनामेवं खल्वपि यज्ञश्छिन्नभिन्नो ऽपध्वस्त उत्पाताद्भुतो बहुलो ऽथर्वभिरसंस्कृतो ऽसुरगन्धर्वयक्षरक्षसपिशाचानां[5] भागधेयं भवत्येवमादीनां[6] चान्येषां विनष्टोपजीविनां[7] ' तदपि श्लोकाः '

छिन्नभिन्नो ऽपध्वस्तो विश्रुतो[8] बहुधा मखः ।
इष्टापूर्तद्रविणंगृह्य यजमानस्यावापतत्[9] ॥
ऋत्विजां च विनाशाय राज्ञो जनपदस्य च ।
संवत्सरविरिष्टं तद्यत्र यज्ञो विरिष्यते ॥

1) °र्पित D; 2) °धीयानश्चरितचर्यो D; 3) नूनान° A, D, E und F; 4) °मकरं पुण्डरीकनूखरक्षस B; so corr.; die hss. °क्षखरक्षस°; 5) So corr.; die hss. °राक्षसपिशाचानां; 6) °मादीना B; 7) °जीवनां B und D; 8) विसृतो A und E; वितो F; 9) °स्यवापतत F.

दक्षिणाप्रवणीभूतो यज्ञो दक्षिणतः स्मृतः ।
हीनाङ्गो रक्षसां भागो ब्रह्मवेदादसंस्कृतः ॥
चतुष्पात्सकलो यज्ञश्चातुर्होत्रविनिर्मितः[1] ।
चतुर्विधे स्थितो मन्त्रैर्ऋत्विग्भिर्वेदपारगैः ॥
प्रायश्चित्तैरनुध्यानैरनुज्ञानानुमन्त्रणैः ।
होमैश्च यज्ञविभ्रंशं सर्वं ब्रह्मा प्रपूरयेद्[2] ॥

इति ' तस्माद्यजमानो भृग्वङ्गिरोविदमेव तत्र[3] ब्रह्माणं वृणीयात्स हि यज्ञं तारयतीति ब्राह्मणम् ' ॥ ५ ॥

यज्ञो वै देवेभ्य उदक्रामन्न[4] वो ऽहमन्नं भविष्यामीति ' नेति[5] देवा अब्रुवन्नन्नमेव नो भविष्यसीति ' तं देवा विमेथिरे ' स एभ्यो विहृतो[6] न प्रबभूव ' ते होचुर्देवा ' न वै न इत्थं विहृतो[6] ऽलं भविष्यति ' हन्तेमं संभरामेति[7] ' तं संजभ्रुस्तं[8] संभृत्योचुरश्विनाविमं[9] भिषज्यतमित्यश्विनौ[10] वै देवानां भिषजावश्विनावध्वर्यू ' तस्मादध्वर्यू घर्मं संभरतस्तं[11] संभृत्योचतुर्ब्रह्मन्घर्मेण प्रचरिष्यामो होतर्घर्ममभिष्टुह्युद्गातः सामानि गायेति[12] ' प्रचरत घर्ममित्य-

1) यत्तश्च° A pr. m. und F; 2) पूरयेद् E; 3) Fehlt in A, B und F; 4) उत्क्रामन्न B; 5) तेनेति A und B; 6) विहतो A und D; 7) °रामीति A, B, E und F; 8) जभ्रुस्तं B; 9) संभृत्योचतुर° B und E; 10) त्तिषज्य° A; विभज्य° F; 11) संचरतस्तं D; 12) गायति D.

नुजानाति ' ब्रह्मप्रसूता ह्रि प्रचरन्ति ' ब्रह्म ह्येदं प्रसवानामीशे ' सवितृप्रसूततायै[1] ' घर्मं तपामि ब्रह्म जज्ञानमियं पित्र्या राष्ट्र्येवग्र इति घर्मं ताप्यमानमुपासीत[2] शस्त्रवदर्धर्चश आह्वावप्रतिगरवर्जं रूपसमृद्धाभिरेतद्वै यज्ञस्य समृद्धं यद्रूपसमृद्धं[3] ' यत्कर्म क्रियमाणमृग्यजुर्वाभिवदति स्वस्ति तस्य यज्ञस्य पारमश्नुते य एवं वेद ' देवमिथुनं[4] वा एतद्यद्घर्मस्तस्मादन्तर्धाय[5] प्रचरन्त्यन्तर्हिता[6] वै मिथुनं चरन्तीति[7] ' तदेतद्देवमिथुनमित्याचक्षते ' तस्य यो घर्मस्तच्छिश्नं ' यौ शफौ तावाण्डौ ' योपयमनी[8] ते[8] श्रोणिकपाले ' यत्पयस्तद्रेतस्तदग्नौ देवयोन्यां रेतो ब्रह्ममयं धत्ते प्रजननाय ' सोऽग्निर्देवयोनिर्ऋङ्मयो[9] यजुर्मयः साममयो ब्रह्ममयोऽमृतमय आहुतिमयः सर्वेन्द्रियसंपन्नो यजमान ऊर्ध्वः स्वर्गं लोकमेति ' तदाहुर्न प्रथमयज्ञे प्रवर्ग्यं कुर्वीतानुपनामुका[10] ह वा एनमुत्तरे यज्ञक्रतवो भवन्तीति ' कामं तु[11] यो[11] ऽनूचानः श्रोत्रियः[12] स्यात्तस्य[12] प्रवृञ्ज्यादात्मा[13] वै स यज्ञस्येति विज्ञायते ' ऽपशिरसा ह वा

1) °प्रसूतानायै A; 2) °पसीत A, B, E und F; 3) °समृठ D; 4) So corr.; die hss. वेदमिथुनं; 5) °न्तर्धा हि B, D und E; 6) A fügt ह ein; 7) चरन्सीति D; 8) So corr.; die hss. य उपयमनी के; 9) °योनिमृगमय B; °योनिरृग्मयो E; °योनी ऋङ्मयो F; 10) So corr.; die hss. °नुपनामका; 11) रूपो B; 12) श्रोत्रियात्तस्य F; 13) प्रवृत्यादात्मा E.

एष यज्ञेन यजते[1] यो[2] ऽप्रवर्ग्येण[2] यजते[2] 'शिरो ह वा एतद्यज्ञस्य यत्प्रवर्ग्यस्तस्मात्प्रवर्ग्यवतैव[3] याजयेन्नाप्रवर्ग्येण[4] 'तदप्येषाभ्यनूक्ता चत्वारि शृङ्गेति' ॥ ६ ॥

देवाश्च ह वा ऋषयश्चासुरैः संयत्ता[5] आसंस्तेषामसुराणामिमाः पुरः प्रत्यभिजिता आसन्नयस्मयी पृथिवी रजतान्तरिक्षं हरिणी द्यौस्ते[6] देवाः संघातंसंघातं पराजयन्त 'ते ऽविदुरनायतना हि वै स्मस्तस्मात्पराजयामह[7] इति 'त एताः पुरः प्रत्यकुर्वत हविर्धानं दिव आग्नीध्रमन्तरिक्षात्सदः पृथिव्यास्ते देवा अब्रुवन्नुपसदमुपायामोपसदा वै महापुरं जयन्तीति 'त एभ्यो लोकेभ्यो निरघ्नन्नेकयामुष्माल्लोकादेकयान्तरिक्षादेकया पृथिव्यास्तस्मादाहुरुपसदा वै महापुरं[8] जयन्तीति 'त एभ्यो लोकेभ्यो निर्हता ऋतून्प्राविशंस्ते[9] षडुपायंस्तानुपसद्भिरेवर्तुभ्यो[10] निरघ्नन्द्वाभ्याममुष्माल्लोकाद्द्वाभ्यामन्तरिक्षाद्द्वाभ्यां पृथिव्यास्त ऋतुभ्यो निर्हताः[11] संवत्सरं प्राविशंस्ते द्वादशोपायंस्तानुपसद्भिरेव संवत्सरान्निरघ्नंश्चतसृभिरमुष्माल्लोकाच्चतसृभिरन्तरिक्षाच्चतसृभिः पृथिव्यास्ते संवत्सरा-

---

1) यजन्ते B; 2) Fehlt in D; 3) °वर्ग्य वतैव B; °वर्ग्यतयैव F; 4) याजतन्ना° F; 5) संयता D; संयन्ता E; 6) ध्यौस्ते A; द्यौस्ते F; 7) So corr.; die hss. ध्यस्तस्मात्पराजयामहा; 8) महापुरे D; पुरं F; 9) °विशांस्ते B; 10) द्वादशोपायंस्ता° F; 11) निर्हाता: D.

निर्हता अहोरात्रे प्राविशंस्तौ यत्सायमुपायंस्तेनैनान्रात्र्या[1] अनुदन्त यत्प्रातस्तेनाह्नस्तस्माद्गौः सायं प्रातस्तनमाप्यायते[2] प्रातः सायन्तनं[3]' तानुपसद्भिरेवैभ्यो लोकेभ्यो नुदमाना[4] आयंस्ततो देवा अभवन्परासुराः' सर्वेभ्य एवैभ्यो लोकेभ्यो[5] भ्रातृव्यं नुदमान इति य एवं विद्वानुपसदमुपैति' ॥ ७ ॥

न द्वादशाग्निष्टोमस्योपसदः स्युरशान्ता निर्मृज्युर्न[6] तिस्रो ऽहीनस्योपरिष्टाद्यज्ञक्रतुर्गरीयानभिषीदेद्यथा गुरुर्भारो ग्रीवा निःशृणीयादार्तिमार्छेद्द्वादशाहीनस्य[7] कुर्यात्प्रत्युत्तब्ध्यै[8] सयत्वाय[9]' तिस्रो ऽग्निष्टोमस्योपसदः स्युः शान्त्या[10] अनिर्मार्गाय[10]' ते देवा असुर्यानिमांल्लोकान्नान्वैतुमधृष्णुवंस्तानग्निना[11] मुखेनान्ववायन्यदग्निमत्युपसदां[12] प्रतीकानि भवन्ति[13] यथा क्षेत्रपतिः क्षेत्रे ऽन्ववनयत्येवमेवैतदग्निना[14] मुखेनेमांल्लोकानभिनयन्तो यन्ति' यो ह वै देवान्साध्यान्वेद सिध्यत्यस्मा' इमे वाव लोका

1) °स्तेनैना राज्या D; 2) प्रातस्तमाप्या° E; 3) सायन्तनू E; 4) So corr.; die hss. नुद्मान; B नद्मान; 5) Fehlt in F; 6) So corr. nach Kāṭh.; die hss. °ड्येरन्; 7) So corr. nach Kāṭh. XXIV 10, die hss. निश्रीणीयादार्तिमार्छेद्वाद°, 8) So corr. nach Kāṭh., die hss. °त्प्रत्युतथै; 9) वयत्वाय E; 10) So corr. nach Kāṭh.; die hss. शान्ताग्निर्मार्गाय; 11) So corr. nach Kāṭh. die hss. °कान्नान्ववैतुमधृ°; 12) °पसदा A und F; 13) भवति D; 14) ऽन्वधनय° B; ऽन्ववय° D.

यत्साध्या[1] देवाः' स य एवमेतान्त्साध्यान्वेद सिध्यत्यस्मै' सिध्यत्यमुष्मै सिध्यत्यस्मै[2] लोकाय[2] य एवंविद्वानुपसदमुपैति' ॥ ८ ॥

अथ यत्राहाध्वर्युरग्नीद्देवपत्नीर्व्याचक्ष्व[3] सुब्रह्मण्य सुब्रह्मण्यामाह्वयेति तदपरेण गार्हपत्यं प्राङ्मुखस्तिष्ठन्ननवानन्नाग्नीध्रो[4] देवपत्नीर्व्याचष्टे' पृथिव्यग्नेः पत्नी' वाग्वातस्य पत्नी' सेनेन्द्रस्य[5] पत्नी[5]' धेना[5] बृहस्पतेः पत्नी' पथ्या पूष्णः पत्नी' गायत्री वसूनां पत्नी' त्रिष्टुब्रुद्राणां[6] पत्नी' जगत्यादित्यानां पत्न्यनुष्टुम्मित्रस्य[7] पत्नी' विराड्वरुणस्य पत्नी' पङ्क्तिर्विष्णोः पत्नी' दीक्षा[8] सोमस्य राज्ञः पत्नीत्यंति भ्रातृव्यानारोहति नैनं भ्रातृव्या आरोहन्त्युपरि भ्रातृव्यानारोहति य एवंविद्वानाग्नीध्रो[9] देवपत्नीर्व्याचष्टे' ॥ ९ ॥

यथा वै रथ एकैकमरमभिप्रतितिष्ठन्वर्तत एवं यज्ञ एकैकां तन्वमभिप्रतितिष्ठन्नेति' पुरा प्रचरितोराग्नीध्रीये होतव्या' एतद्ध वा उवाच वासिष्ठः[10] सात्यहव्यो[11] ऽस्कन्सोम[12] इत्युक्ते मा सूर्त्तत[13] प्रचरत प्रातर्वावाग्याहं

---

1) य साध्या D; 2) So corr.; die hss. °त्यस्माल्लोकाद्; 3) °चक्षु D und F; 4) °स्तिष्ठन्ननवानाग्नीध्रो A; 5) Fehlt in D; 6) °ब्रुद्राणी D; 7) पत्नानु° D; 8) दक्षा D; 9) °ग्नीध्रा D; 10) वाशिष्ठः D; 11) सात्यहव्या A; 12) स्तं सोम E; 13) सूक्षीत D; सूक्षत F.

सोमं समस्थापयमिति[1] ' नास्य सोम स्कन्दति य एवंविद्वान्त्सोमं पिबति ' स ह स्म वै स आसन्द्यामासीनः[2] सक्तुभिरुपमथ्य सोमं पिबत्यहं[3] वाव[4] सर्वतो यज्ञं वेद[5] य एतान्वेद[6] ' न मामेष हिंसिष्यतीति[7] ' नैनं सोमपीथो न पेयो हिनस्ति य एवंविद्वान्त्सोमं पिबति[8] ' तं ह स्म यदाहुः कस्मात्त्वमिदमासन्द्यामासीनः सक्तुभिरुपमथ्य सोमं पिबसीति ' देवतास्वेव यज्ञं प्रतिष्ठापयामीत्यब्रवीद्ब्रह्मणो यस्यैवंविदुषो यस्यैवंविद्वान्यज्ञार्त्या[9] यज्ञे[9] प्रायश्चित्तं[10] जुहोति ' देवतास्वेव यज्ञं प्रतिष्ठापयति ' यज्ञार्तिं प्रतिजुहुयात्सयोनित्वाय[11] ' त्रयस्त्रिंशद्वै यज्ञस्य तन्व इत्येकान्नत्रिंशत्स्तोमभागास्त्रीणि[12] सवनानि ' यज्ञश्चतुर्थ ' स्तोमभागैरेवैतत्स्तोमभागान्प्रतिप्रयुङ्क्ते सवनैः सवनानि यज्ञेन यज्ञं ' सर्वा ह वा अस्य यज्ञस्य तन्वः प्रयुक्ता भवन्ति सर्वा आप्ताः सर्वा अवरुद्धा ' देवस्य सवितुः प्रसवे[13] बृहस्पतये स्तुतेति ' यद्वै सविता देवेभ्यः प्रासुवत्तेनार्ध्नुवन्त्सवितृ-

---

1) A, B, E und F संस्थापयामीति; D संस्थापयामिति; 2) So corr.; die hss. हासन्द्य°; 3) पिब्रन्त्यहं D; पिब्रसहं F; 4) वा F; 5) वद D; 6) ? ? एतां वेद A, D und F; 7) °ष्यातीति E; 8) पिब्रन्ती D; 9) °न्यज्ञार्तान्यज्ञे A pr. m., B, E und F; °न्यज्ञार्त्यान्यज्ञे A sec. man.; °न्यज्ञार्त्याय यज्ञे D; 10) प्रायश्चित्तिं A sec. m., D und F; 11) °यनित्वाय D; 12) इत्येतान्न° D; इत्येकं हूत्रिं° E; इत्येतान्नत्रिंशत्स्तोम° D; इत्येकान्हत्रिं° F; 13) सवे D.

प्रसूता एव स्तुवन्त्यृध्नुवन्त्यृध्यन्ते ह वा अस्य स्तोमा यज्ञ[1] ' ऋध्यते ऋध्यते[2] प्रजाया[3] ' ऋध्यते पशुभ्य ' ऋध्यते[4] ब्राह्मणो यस्यैवंविद्वान्ब्रह्मा भवति[5] ' ॥ १० ॥

देवाश्च ह वा असुराश्चास्पर्धन्त ' ते देवाः समावदेव[6] यज्ञे कुर्वाणा आसन्यदेव दवा अकुर्वत[7] तदसुरा अकुर्वत ' ते न व्यावृतमगच्छंस्ते देवा अब्रुवन्नयतेमं[8] यज्ञं तिर उपर्यसुरेभ्यस्तंस्यामह[9] इति ' तमेताभिराच्छाद्योदक्रामन्यजूंषि[10] यज्ञे[11] समिधः स्वाहेति ' तं तिर उपर्यसुरेभ्यो यज्ञमतन्वत ' तमेषां यज्ञमसुरा नान्ववायंस्ततो देवा अभवन्परासुराः ' स य[12] एवंविद्वांस्तिर उपर्यसुरेभ्यो यज्ञं तनुते भवत्यात्मना परास्याप्रियो भ्रातृव्यो भवत्येतैरेव जुहुयात्समृतयज्ञे[13] चतुर्भिश्चतुर्भिरन्वाख्यायं[14] ' पुरस्तात्प्रातरनुवाकस्य जुहुयादेतावान्वै[15] यज्ञो ' यावानेष यज्ञस्तं वृङ्क्ते ' सयज्ञो भवत्ययज्ञ इतर ' एतैरेव जुहुयात्पुरस्ताद्द्वादशाहस्यैष[16] ह वै प्रत्यक्षं द्वादशाहस्तमेवालभ्यै-

1) यज्ञ ist wschl. interpolation; 2) ऋध्यति D; 3) प्रजया A, B, D und F; 4) Fehlt in F; 5) भवन्ति F; 6) °वदेवा A, B, E und F; 7) आकुर्वत D; 8) अयत ist corrupt; man erwartet एत; 9) So corr.; die hss. °स्तेस्यामहा; 10) So corr.; die hss. °क्रामन्ति यजूंषि; 11) यज्ञ D; 12) Fehlt in D; 13) So corr.; die hss. °त्सवृतयज्ञे; 14) So corr.; die hss. °ख्यानं; 15) °तावान्वे D; 16) So corr.; die hss. °स्ताद्वादशाहस्यैष.

तैरेव[1] जुहुयात्पुरस्ताद्दीक्षाया[2] ' एषा[3] ह वै प्रत्यक्षं[4] दीक्षा ' तामेवालभ्यैतैरेवातिथ्यमभिमृशेद्यज्ञेन यज्ञमयजन्त देवा इति ' ॥ ११ ॥

यत्र विजानाति ब्रह्मन्त्सोमो[5] ऽस्कन्निति तमेतया-लभ्याभिमन्त्रयते[6] ऽभूद्देवः सविता[7] वन्द्यो[8] नु न इदा-नीमह्न उपवाच्यो नृभिः । वि यो रत्ना[9] भजति मान-वेभ्यः[10] श्रेष्ठं नो अत्र द्रविणं यथा दधदिति ' ये अग्नयो अप्स्वन्तरिति[11] सप्तभिरभिजुहोति ' यदेवास्यावस्कन्नं भ-वति तदेवास्यैतदग्नौ स्वगाकरोत्यग्निर्हि[12] सुकृतीनां[13] हविषां प्रतिष्ठाथ[14] विसृप्य वैप्रुषान्होमाञ्जुहोति[15] द्र-प्सश्चस्कन्देति ' या एवास्याभिषूयमाणस्य[16] विप्रुष स्क-न्दन्त्यंशुर्वा[17] ता एवास्यैतदाहवनीये[18] स्वगाकरोत्या-हवनीयो ह्याहुतीनां[19] प्रतिष्ठा ' यस्ते द्रप्स स्कन्दतीति ' स्तोको[20] वै द्रप्सो ' यस्ते अंशुर्बाहुच्युतो[21] धिषणाया

---

1) द्वादशाहस्तामवा° E; 2) °स्ताद्धदीक्षा D; 3) एष A, B und E; 4) प्रत्यक्ष B; B fügt वै ein; 5) °न्त्सोमा B; 6) तमेत्वया° B; 7) सवि-तां B; 8) वन्धे A pr. m. und E; 9) रत्ना B; 10) मानवभ्य: D; 11) अप्सन्तरिति E; 12) स्वगा° E; 13) सुकृप्तीनां B, D und E; 14) प्रतिष्ठाप्य A, B und F; 15) °न्होमाञ्जु° B und E; °ञ्जुहति D; 16) एवास्याभिष्टय° B; 17) स्कन्दत्यं° E; ? vielleicht °म्सुर्वाव; 18) या-वास्येतदाह° D; 19) स्वाहुतीनां F; 20) सोको B; 21) अंस्सुब-हुव्युतो D.

उपस्यादिति ' बाहुभिरभिच्युतो ऽंशुरधिषवणाभ्यामधिस्कन्दत्यंध्वर्योर्वा[1] परि[2] यः[2] पवित्रात्तं[3] ते जुहोमि मनसा वषट्कृतमिति ' तद्यथा वषट्कृतं स्वाहाकृतं हुतमेवं[4] भवति ' ॥ १२ ॥

ऋषयो वा इन्द्रं प्रत्यक्षं नापश्यंस्तं[5] वसिष्ठ एव प्रत्यक्षमपश्यत्सो ऽबिभेदितरेभ्य ऋषिभ्यो मा प्रवोचदिति ' सो ऽब्रवीद्ब्राह्मणं[6] ते वक्ष्यामि यथा त्वत्पुरोहिताः प्रजाः प्रजनिष्यन्ते[7] ऽथेतरेभ्य ऋषिभ्यो मा प्रवोच[8] इति ' तस्मा एतान्स्तोमभागानुवाच ' ततो[9] वसिष्ठपुरोहिताः[10] प्रजाः प्राजायन्त[11] ' स्तोमो वा एतेषां भागस्तत्स्तोमभागानां स्तोमभागत्वं ' रश्मिरसि क्षयाय त्वेति ' क्षयो वै देवा[12] ' देवेभ्य एव यज्ञं प्राह ' प्रेतिरसि धर्मणे[13] त्वेति ' धर्मो मनुष्या ' मनुष्येभ्य एव यज्ञं प्राहान्वितिरसि संधिरसि प्रतिधिरसीति ' त्रयो वै लोका ' लोकेष्वेव यज्ञं प्रतिष्ठापयति ' विष्टम्भो ऽसीति ' वृष्टिमेवावरुन्द्धे ' प्रावो[14] ऽस्य-

---

1) So corr.; die hss. °स्कन्दन्त्यध्व°; 2) पर्यैः A pr. m.; पर्यः B, E und F; 3) पवित्रातं D und F; पवित्रान्तं E; 4) हुतामेवं A pr. m.; हुतमिवं A sec. m.; हुतामवं D; 5) पश्यस्तं D; 6) °द्ब्रह्मणं A pr. m.; 7) प्रजन इष्यन्ते A und F; प्रजनिष्यन्ते B und D; 8) So corr.; die hss. प्रवोचद्; 9) दातो B; 10) °रोहितं D; 11) So corr.; प्रजायन्त A, B, E und F; प्रजायन्त D; 12) Fehlt in F; 13) धर्मेणे A pr. m. und F; धर्मणो B; 14) ? ?; T. S. III 5. 2. 3 प्रवासि अनुवासीति.

क्रांसीति[1] मिथुनमेव करोत्युशिगसि प्रकेतो ऽसि सुदितिरसीत्यंष्टौ[2] वसव एकादश रुद्रा द्वादशादित्या वाग्द्वात्रिंशी स्वरस्त्रयस्त्रिंशस्त्रयस्त्रिंशद्देवा ' देवेभ्य एव[3] यज्ञं प्राह्णौजो ऽसि पितृभ्यस्त्वेति ' बलमेव तत्पितृननुसंतनोति[4] ' तन्तुरसि प्रजाभ्यस्त्वेति ' प्रजा एव पशूननुसंतनोति[5] ' रेवदस्योषधीभ्यस्त्वेत्योषधीष्वेव[6] यज्ञं प्रतिष्ठापयति ' पृतनाषाडसि पशुभ्यस्त्वेति ' प्रजा एव पशूननुसंतनोत्यभिजिदसीति[5] ' वज्रो वै षोडशी ' व्यावृत्तो[7] ऽसौ वज्रस्तस्मादेषो ऽन्यैर्व्यावृत्तो[8] ' नाभुरसीति ' प्रजापतिर्वै सप्तदशः ' प्रजापतिमेवावरुन्द्धे ' ॥ १३ ॥

अधिपतिरसि धरुणो ऽसि संसर्पो[9] ऽसि वयोधा असीति[10] ' प्राणो ऽपानश्चक्षुः श्रोत्रमित्येतानि वै पुरुषमकरन्प्राणानुपैति ' प्रजात्या एव ' त्रिवृदसि प्रवृदसि स्ववृदस्यनुवृदसीति ' मिथुनमेव करोत्यारोहो ऽसि प्ररोहो ऽसि संरोहो ऽस्यनुरोहो ऽसीति ' प्रजापतिरेव ' वसुको ऽसि वस्यष्टिरसि वेषश्रीरसीति[11] ' प्रतिष्ठितिरेवाक्रमो ऽसि

1) Vid. p. १०८ Note 14; 2) सुदोति° B; 3) एवं D; 4) तान्पि° E; 5) पशुन° A und B; 6) °षधिषु‍ेव A pr. m.; 7) °वृत्तौ A pr. m; °वृत D und F; °वृत्ते E; 8) So corr.; die hss. ऽन्यै व्यावृत्तो; E ऽन्यै वावृत्तो; 9) सर्पो E; संसर्प्यात् D; 10) सोति D und F; 11) वेष.मश्री° E.

संक्रमो ऽस्युत्क्रमो ऽस्युत्क्रान्तिरसीत्यृद्धिरेव[1] 'यद्धि सवि-
ता देवेभ्यः प्रासुवत्तेनार्ध्नुवन्त्सवितृप्रसूता एव स्तुवत्यृ-
ध्नुवन्ति 'बृहस्पतये स्तुतेति 'बृहस्पतिर्वा आङ्गिरसो[2]
देवानां ब्रह्मा 'तदनुमत्यैवों[3] भूर्जनदिति प्रातःसवन'
ऋग्भिरेवोभयतो ऽथर्वाङ्गिरोभिर्गुप्ताभिर्गुप्ते स्तुतेत्यैवों[4]
भुवो जनदिति माध्यंदिने सवने 'यजुर्भिरेवोभयतो ऽथ-
र्वाङ्गिरोभिर्गुप्ताभिर्गुप्ते 'स्तुतेत्यैवों स्वर्जनदिति तृतीयस-
वने[5] 'सामभिरेवोभयतो ऽथर्वाङ्गिरोभिर्गुप्ताभिर्गुप्ते स्तुते-
त्यैवांथ[6] यद्यहीन उक्थ्यः षोडशी वाजपेयो[7] ऽतिरात्रो
ऽप्तोर्यामा वा स्यात्सर्वाभिः सर्वाभिरत ऊर्ध्वं व्याहृतिभिर-
नुजानात्यों[8] भूर्भुवः स्वर्जनद्वृधत्करद्रुहन्महत्तच्छमोमि-
न्द्रवन्त[9] स्तुतेति सेन्द्रान्मापगायत[10] सेन्द्रान्स्तुतेत्यैवेन्द्रि-
यवानृद्धिमान्वशीयान्भवति[11] य एवं वेद यश्चैवंविद्वा-
न्स्तोमभागैर्यजते[12]' ॥ १४ ॥

यो ह वा आयतांश्च प्रतियतांश्च[13] स्तोमभागान्वि-
द्यात्स[14] विष्वर्धमानयोः समृतसोमयोर्ब्रह्मा[15] स्यात्स्तु-

---

1) °सित्यृधित्येव D; °सित्यृधिरेव B; 2) अङ्गिरसो F; आङ्गिरसों E; 3) °त्यैवा B; 4) °त्यैवो B und E; 5) °सवन D; 6) °वाथ B; 7) वाजपेये D; 8) °नात्यो E; 9) °न्द्रवं D; 10) ? ?; 11) सेन्द्रियां स्तुते B und D; 12) यश्चैवंवि° D; 13) प्रीतीयतांश्च D; 14) So corr.; A, D, E und F °न्विद्यात्स; B °न्विन्द्यात्स; 15) So corr.; die hss. समृत°.

तेषे[1] स्तुतोर्ज्ञे[2] स्तुत देवस्य सवितुः सवे बृहस्पतिं[3] वः प्रजापतिं वो वसून्वो देवान्रुद्रान्वो[4] देवानादित्यान्वो देवान्साध्यान्वो देवानाप्त्यान्वो[5] देवान्विश्वान्वो देवान्सर्वान्वो देवान्विश्वतस्परि हवामहे ' जनेभ्यो ऽस्माकमस्तु केवल ' इतः कृणोतु वीर्यमित्येते[6] ह वा आयताश्च[7] प्रतियताश्च[8] स्तोमभागास्ताञ्जपन्नुपर्युपरि[9] परेषां ब्रह्माणमवेक्षेत[10] ' तत एषामधःशिरा ब्रह्मा पतति ' ततो यज्ञस्ततो यजमानो[11] ' यजमाने ऽधःशिरसि पतिते स देशो ऽधःशिराः पतति यस्मिन्नर्धे[12] यजन्ते ' देवाश्च ह वा असुराश्च समृतसोमौ[13] यज्ञावतनुतामथ[14] बृहस्पतिराङ्गिरसो देवानां ब्रह्मा ' स आयतांश्च प्रतियतांश्च स्तोमभागाञ्जपन्नुपर्युपर्यसुराणां ब्रह्माणमवैक्षत[15] ' तत एषामधःशिरा ब्रह्मापतत्ततो यज्ञस्ततो ऽसुरा इति ' ॥ १५ ॥

देवा यज्ञं पराजयन्त ' तमाग्नीध्रात्पुनरुपाजयन्त ' तदेत-

---

1) So corr.; स्तुतोषे A, D, E und F; स्तुतोमे B; 2) स्तुतोर्द D und E; 3) बृहस्पतिर् D und E; 4) देवा रुद्रान्वो D; 5) Fehlt in F; 6) °त्यते D; °त्येत F; 7) आयतांश्च A, B und F; अयतांश्च D; अयताश्च E; 8) प्रतियतांश्च A, B, D und F; 9) स्तोमभागांस्ता° A, D und F; स्तोमभागास्ताः ज° B; 10) °वेक्षते F; 11) Fehlt in F; 12) °न्नर्धे D; 13) So corr.; die hss. संवृतसोमौ; 14) Man erwartet अतन्वत; 15) So corr.; °मवेक्षत A und E; °मवेक्षेत B, D und F.

यज्ञस्यापराजितं[1] यदाग्नीध्रं ' यदाग्नीध्राद्धिष्ण्यान्विहरति[2] तत एवैनं पुनस्तनुते ' पराजित्या ' अप[3] खलु वा एते गच्छन्ति ये बहिष्पवमानं[4] सर्पन्ति[5] ' बहिष्पवमाने[6] स्तुत आहाग्नीदग्नीन्विहर बर्हि स्तृणीहि पुरोडाशानलंकुर्विति[7] ' यज्ञमेवापराजित्य[8] पुनस्तन्वाना[9] आयन्त्यंङ्गारैर्द्वे सवने विहरति शलाकाभिस्तृतीयसवनं[10] ' सशुक्रत्वायायो[11] संभवत्येवमेवैतद्दक्षिणतो वै देवानां यज्ञं रक्षांस्यजिघांसंस्तान्याग्नीध्रेणापाघ्नत[12] ' तस्माद्दक्षिणामुखस्तिष्ठन्नग्नीत्प्रत्याश्रावयति ' यज्ञस्याभिजित्यै ' रक्षसामपहत्यै रक्षसामपहत्यै ' ॥ १६ ॥

तदाहुरथ कस्मात्सौम्य एवाध्वरे प्रवृताहुतीर्जुह्वति[13] न हविर्यज्ञ इत्यकृत्स्ना वा एषा देवयज्या[14] यद्धविर्यज्ञो[15] 'ऽथ हैषैव कृत्स्ना[16] देवयज्या यत्सौम्यो[17] ऽध्वरस्तस्मात्सौम्य एवाध्वरे प्रवृताहुतीर्जुह्वति[18] ' जुष्टो वाचे भूयासं जुष्टो वाचस्पतये देवि वाग्यद्वाचो मधुमत्तमं[19] तस्मिन्मा

1) जित E; 2) So corr.; die hss. यदाग्नीधाधि°; 3) च प E; 4) °वमाने E; 5) सर्पयन्ति B; 6) °वमानं D; 7) °कुर्वीति A pr. m.; 8) °जित्यं B; 9) °न A, B, E und F; 10) ग्रालाका° F; 11) °ययो F; 12) °संस्तन्याग्नी° B; 13) प्रवृत्ता° A pr. m. und D; 14) देवयज्ञा D; 15) °र्यज्ञा D; 16) कृत्स्ना एषा A pr. m., D und E; 17) य सोम्यो D; 18) प्रवृत्तां हुतो° D; प्रवृत्ता° F; 19) मधुमं E.

धाः स्वाहा वाचे स्वाहा वाचस्पतये स्वाहा सरस्वत्यै स्वाहा सरस्वत्या इति पुरस्तात्स्वाहाकारेण जुहोति ' तस्माद्वागत ऊर्ध्वमुत्सृष्टा यज्ञं वहति मनसोत्तरां[1] ' मनसा हि मनः प्रीतं ' तदु हैके सप्ताहुतीर्जुह्वति[2] सप्त छन्दांसि प्रवृत्तानि[3] प्रतिमन्त्रमिति वदन्तो ' यथा मेखला[4] पर्यस्यते मेध्यस्य चामेध्यस्य[5] च विहृत्या एवं हैवैते न्युप्यन्ते मेध्यस्य चामेध्यस्य[6] च विहृत्यै[7] यज्ञस्य[8] विहृत्यै[8] ' प्राचीनं हि धिष्ण्येभ्यो देवानां लोकाः[9] प्रतीचीनं मनुष्याणां ' तस्मात्सोमं पिबता प्राञ्चो धिष्ण्या नोपसर्प्या[10] ' जनं[11] ह्येतद्देवलोकं ह्यध्यारोहन्ति[12] ' तेषामेतदायतनं[13] चोदयनं च यदाग्नीध्रं[14] च सदश्च ' तद्यो ऽविद्वान्संचरत्यार्तिमार्छत्यथ यो विद्वान्संचरति[15] न स धिष्णीयामार्तिमार्छति ' ॥ १७ ॥

प्रजापतिर्वै यज्ञस्तस्मिन्त्सर्वे कामाः सर्वा इष्टीः[16] सर्वममृतत्वं[17] ' तस्य हैते गोप्तारो यद्धिष्ण्यास्तांत्सदः[18]

---

1) मनसोन्तरां D; मनसोतरा E; 2) समाहु° F; 3) प्रवृतानि B; 4) मेखाल्ला E; 5) Fehlt in E; 6) Fehlt in den hss.; 7) यद्वृत्यै E; 8) Fehlt in F; 9) लोक B; 10) नोपसर्पा A, B und E; नोपसप्य D; 11) ज्ञिनं D; 12) So corr.; die hss. ह्युध्या°; 13) °यतन A; 14) °ग्नीध्रयं D; 15) °चरन्ति D; 16) इष्टा: D; 17) D fügt च ein; 18) यद्धिष्णाया° E.

प्रसर्प्स्यन्नमस्करोति[1] ' नमो नम इति ' न हि नमस्कारमति देवास्ते[2] ह नमसिताः कर्तारमतिसृजन्तीति[3] ' तत एतं प्रजापतिं यज्ञं प्रपद्यते[4] नमो नम इति ' न हि नमस्कारमति देवाः ' स तत्रैव यजमानः सर्वान्कामानाप्नोति सर्वान्कामानाप्नोति ' ॥ १८ ॥

यो वै सदस्यान्गन्धर्वान्वेद न[5] सदस्यामार्तिमार्छति ' सदः[6] प्रसर्प्स्यन्ब्रूयादुपद्रष्ट्रे नम इत्यग्निर्वै द्रष्टा तस्मा[7] उ एवात्मानं परिददाति[8] ' सर्वमायुरेति न पुरा जरसः प्रमीयते य एवं वेद ' सदः प्रसृप्य ब्रूयादुपश्रोत्रे नम इति ' वायुर्वा उपश्रोता ' तस्मा उ एवात्मानं परिददाति[9] ' सर्वमायुरेति न पुरा जरसः प्रमीयते य एवं वेद ' सदः प्रसर्पन्ब्रूयादनुख्यात्रे[10] नम इत्यादित्यो वा अनुख्याता ' तस्मा उ एवात्मानं परिददाति[9] ' सर्वमायुरेति न पुरा जरसः प्रमीयते य एवं वेद ' सदः प्रसृतो ब्रूयादुपद्रष्ट्रे नम इति ' ब्राह्मणो वा उपद्रष्टा ' तस्मा उ[11] एवात्मानं परिददाति[9] ' सर्वमायुरेति न पुरा जरसः प्रमीयते य एवं

1) °स्कारोति D; 2) देवस्ते D; 3) °भिसृजन्तीति A sec. m. und F; 4) प्रपद्येते A pr. m., B und F; 5) Man erwartet न स सद°; 6) सदा D; 7) तस्माद् F; 8) So corr.; die hss. परिद्धाति; परिज्ञि D; 9) So corr.; die hss. °द्धाति; 10) प्रसृपो ब्रूया° D; 11) So corr.; die hss. ऊ.

वेद' ते वै[1] सदस्या गन्धर्वाः' स[1] य एवमेतान्सदस्या-
न्गन्धर्वानविद्वान्सदः प्रसर्पति स सदस्यामार्तिमार्छत्यथ
यो विद्वान्संचरति[2] न सदस्यामार्तिमार्छत्येतेन[3] ह स्म
वा अङ्गिरसः[4] सर्वं सदः पर्याहुस्तौ न सदस्यामार्तिमा-
र्छन्त्यथ[5] यान्कामयेत न सदस्यामार्तिमार्छेयुरिति तेभ्य[6]
एतेन सर्वं सदः परिब्रूयात्तौ न सदस्यामार्तिमार्छन्त्यथ[7] यं
कामयेत प्रमीयेतेति तमेतेभ्य आवृश्चेत्प्रमीयते' ॥ १९ ॥

तदाहुर्यदैन्द्रो यज्ञो ऽथ कस्माद्द्वावेव[8] प्रातःसवने
प्रस्थितानां प्रत्यक्षादैन्द्रीभ्यां यजतो होता चैव[9] ब्राह्म-
णाच्छंसी चेदं ते[10] सोम्यं[11] मध्विति होता यजतीन्द्र[12]
त्वा वृषभं वयमिति ब्राह्मणाच्छंसी 'नानादेवत्याभिरितरे'
कथं तेषामैन्द्र्यो भवन्ति' मित्रं वयं हवामह इति मैत्रा-
वरुणो यजति' वरुणं सोमपीतय इति' यद्वै किं च पी-
तवत्तदैन्द्रं[13] रूपं' तेनेन्द्रं प्रीणाति' मरुतो यस्य हि क्षये
इति पोता यजति' स[14] सुगोपतमो जन इतीन्द्रो वै गो-
पास्तदैन्द्रं रूपं' तेनेन्द्रं प्रीणात्यग्ने.पत्नीरिहावहेति नेष्टा

---

1) Fehlt in D; 2) °चरन्ति D; 3) °त्यते E; 4) अङ्गिरसं E;
5) Vielleicht °तिमार्छन्नित्यथ; °मार्छत्यथ A, B, D und F; 6) Fehlt in B;
7) °मार्छत्यथ A, D und F; 8) So corr.; die hss. कस्माद्वावेव; 9) वेव D;
10) मे E; 11) सौम्यं F; 12) यजन्तीन्द्र D; 13) °त्तदैद्र D;
14) च D.

यजति । त्वष्टारं सोमपीतय इति । यद्वै किं च पीतवत्तदैन्द्रं रूपं । तेनेन्द्रं प्रीणात्युक्षान्नाय वशान्नायेत्याग्नीध्रो[1] यजति । सोमपृष्ठाय वेधस इतीन्द्रो वै वेधास्तदैन्द्रं रूपं । तेनेन्द्रं प्रीणाति । प्रातर्यावभिरागतं देवेभिर्जेन्यावसू[2] इन्द्राग्नी सोमपीतय इति । स्वयंसमृद्धा अच्छावाकस्यैवमु हैता ऐन्द्र्यो[3] भवन्ति । यन्नानादेवत्यास्तेनान्या देवताः प्रीणाति । यद्गायत्र्यस्तेनाग्नेय्यस्तस्मादेताभिस्त्रयमवाप्तं भवति । ॥ २० ॥

ते वै खलु सर्व एव माध्यंदिने प्रस्थितानां प्रत्यक्षादैन्द्रीभिर्यजन्त्यभितृणवतीभिरेके[4] । पिबा सोममभि यमुग्र तर्द इति होता यजति । स ईं पाहि य ऋजीषी तरुत्र इति मैत्रावरुण । एवा पाहि प्रत्नथा[5] मन्दतु त्वेति ब्राह्मणाच्छंस्यर्वाङेहि[6] सोमकामं त्वाहुरिति पोता । तवायं सोमस्त्वमेह्यर्वाङिति[7] नेष्टेन्द्राय सोमाः प्रदिवो विदाना इत्यच्छावाक । आपूर्णो अस्य कलशः स्वाहेत्याग्नीध्र । एवमु हैता अभितृणवत्यो भवन्तीन्द्रो वै प्रातःसवनं नाभ्यजयत्स एताभिर्माध्यंदिनं सवनमभ्यतृणत्तंयदेताभिर्माध्यंदिनं[8] सवनमभ्यतृणत्तस्मादेता[8] अभितृणवत्यो भवन्ति । ॥ २१ ॥

---

1) °ग्नीध्रा D; 2) °र्जन्यावसू A; °र्जेन्नावसू E; 3) ऐद्रिया A pr. m.; 4) °भिर्यजत्यभितृ° D; 5) पत्नथा A; प्रत्नया D; 6) Ed. B. Ind. °आर्वाङेहि; 7) सोमस्त्वमह्य° D; 8) So corr.; die hss. सवनमभ्यतृणावत्तय°.

तद्याकुर्यदैन्द्रार्भवं तृतीयसवनमथ कस्मादेक एव
तृतीयसवने प्रस्थितानां प्रत्यक्षादैन्द्रार्भव्या यजतीन्द्र[1]
ऋभुभिर्वाजवद्भिः[2] समुक्षितमिति होतैव । नानादेवत्या-
भिरितरे । कथं तेषामैन्द्रार्भव्यो भवन्तीन्द्रावरुणा[3] सुतपा-
विमं सुतमिति मैत्रावरुणो यजति । युवो रथो अध्वरो
देववीतय इति बहूनि वाह । तदृभूणां रूपमिन्द्रश्च[4] सोमं
पिबतं बृहस्पत[5] इति ब्राह्मणाच्छंसी यजत्या वां वि-
शन्त्विन्दवः स्वाभुव इति बहूनि वाह । तदृभूणां रूप-
मा[6] वो वहन्तु सप्तयो रघुष्यद इति पोता यजति ।
रघुपत्वानः प्र जिगात[7] बाहुभिरिति बहूनि वाह । तदृ-
भूणां रूपममेव नः सुहवा आ हि गन्तनेति नेष्टा य-
जति । गन्तनेति बहूनि वाह । तदृभूणां रूपमिन्द्राविष्णू[8]
पिबतं मध्वो अस्येत्यच्छावाको यजत्या वामन्धांसि मदि-
राण्यग्मन्निति बहूनि वाह[9] । तदृभूणां रूपमिमं स्तोम-
मर्हते[10] जातवेदस इत्याग्नीध्रो यजति । रथमिव सं महेमा
मनीषयेति[11] बहूनि वाह । तदृभूणां रूपमेवमु हैता[12]
ऐन्द्रार्भव्यो भवन्ति । यन्नानादेवत्यास्तेनान्या देवताः प्री-

1) यजन्तीन्द्र A sec. m. und B; 2) ग्रात्रुभिर्वा° D; 3) °वरुणा E; 4) Von इन्द्रश्च bis आ वो वहन्तु fehlt in F; 5) बृहस्पति D; 6) Von आ वो वहन्तु bis अमेव नः fehlt in B; 7) जिगातु E; 8) °विष्णुं B; °विष्णा E; 9) वा F; 10) स्तोमर्हते E; 11) मनीषिये B; 12) ता D.

णाति ' यद्व जगत्प्रासाद्धा जागतमु वै तृतीयसवनं ' तृतीयसवनस्य समृद्ध्यै ' ॥ २२ ॥

विचक्षणवतीं वाचं भाषन्ते[1] चनसितवतीं[2] ' विचक्षयन्ति ब्राह्मणं ' चनसयन्ति प्राजापत्यं[3] ' सत्यं वदन्त्येतद्धि मनुष्येषु सत्यं यच्चक्षुस्तस्मादाहुराचक्षाणमद्रागिति[4] ' स यदाहाद्राक्षमिति तथाहास्य श्रद्दधति ' यद्यु वै स्वयं वै[5] दृष्टं[5] भवति न बहूनां जनानामेष[6] श्रद्दधाति[7] ' तस्माद्विचक्षणवतीं वाचं[8] भाषन्ते चनसितवतीं[9] ' सत्योत्तरा हैवैषां वागुदिता भवति[10] ' ॥ २३ ॥

समृतयज्ञो[11] वा एष यद्दर्शपूर्णमासौ[12] ' कस्य वाव देवा यज्ञमागच्छन्ति कस्य वा न[13] ' बहूनां वा[14] एतद्यजमानानां सामान्यमहस्तस्मात्पूर्वेद्युर्देवताः परिगृह्णीयाद्यो ह वै पूर्वेद्युर्देवताः परिगृह्णाति तस्य श्वो भूते यज्ञमागच्छन्ति[15] ' तस्माद्विहव्यस्य चतस्र ऋचो जपेद्यंज्ञविदो हि मन्यन्ते सोम एव समृत[16] इति यज्ञो यज्ञेन समृतः[16] ' ॥ २४ ॥

---

1) भाषते B; 2) वनसि° B; 3) प्रजापत्यं D; 4) °चक्षपामद्रागिति E; 5) Korrupt; B. Ind. वै रिष्टं; 6) जानानामेष E; 7) श्रद्दधति A sec. m.; श्रद्दधन्ति E; 8) Fehlt in D; 9) °तवती D; 10) भवन्ति D; 11) So corr.; die hss. सवृत°; 12) यद् fehlt in B; 13) Fehlt in F; 14) व D; 15) °गच्छति B; 16) So corr.; die hss. सवृत.

॥ इत्यथर्ववेदे गोपथब्राह्मणोत्तरभागे द्वितीयः प्रपाठकः ॥

ओं देवपात्रं वै वषट्कारो[1] ' यद्वषट्करोति[2] देवपात्रेणैव तद्देवतास्तर्पयत्यथो यदाभितृष्यन्तीरभिसंस्थं[3] तर्पयत्येवमेव तद्देवतास्तर्पयति यदनुवषट्करोति ' तद्यथैवादोऽश्वान्वा गा वा पुनरभ्याकारं[4] तर्पयत्येवमेव तद्देवतास्तर्पयति यदनुवषट्करोतीमानेवाग्नीनुपासत इत्याहुर्धिष्ण्यानथ कस्मात्पूर्वस्मिन्नेवाग्नौ जुह्वति[5] पूर्वस्मिन्वषट्करोति[6] ' यदेव सोमस्याग्ने वीहीत्यनुवषट्करोति[6] तेनैव वषट्करोति धिष्ण्यान्प्रीणात्यथ[7] संस्थितान्सोमान्भक्षयन्तीत्याहुर्येषां[8] नानुवषट्करोति ' तदाहुः को नु सोमस्य स्विष्टकृद्भाग इति ' यदेव[9] सोमस्याग्ने[9] वीहीत्यनुवषट्करोति[9] तेनैव संस्थितान्सोमान्भक्षयन्तीत्याहुः ' स उ एष सोमस्य स्विष्टकृद्भागो[10] यदनुवषट्करोति ' ॥ १ ॥

वज्रो वै वषट्कारः ' स[11] यं द्विष्यात्तं[12] मनसा ध्यायन्वषट्कुर्यात्तस्मिंस्तद्वज्रमास्थापयति ' षडिति वषट्करोति[13] '

---

1) Fehlt in F; 2) यद्व fehlt in F; °ट्कारोति D; 3) यदाभितृष्यन्तीर° A pr. m.; B und F; 4) So corr. nach Ait Br. III 5; die hss. °भ्याचारं; 5) जुहूति E; 6) °षट्कारोति D; 7) अथ fehlt in D und E; 8) Von येषां bis सोमस्य hat E. स उ एष; 9) एव सोमस्याग्ने वीहीति fehlt in E; 10) °द्भागो A pr. m. und F; 11) स्व D und E; 12) द्विष्यात्तं D; द्विष्यान्त E; 13) वषट्कारोति D.

षड्वा ऋतव ' ऋतूनामाप्त्यै ' वौषडिति वषट्करोत्यसौ[1] वाव वावृतवः[2] षडेतमेव तदृतुष्वादधात्यृतुषु[3] प्रतिष्ठापयति ' तदु ह स्माह वेद[4] एतानि वा[5] एतेन षट्प्रतिष्ठापयति[6] ' द्यौरन्तरिक्षे प्रतिष्ठितान्तरिक्षं[7] पृथिव्यां ' पृथिव्यप्स्वापः सत्ये[8] ' सत्यं ब्रह्मणि ' ब्रह्म तपसीत्येता एव तद्देवताः[9] प्रतिस्थान्याः[10] प्रतितिष्ठन्तीरिदं[11] सर्वमनु प्रतितिष्ठति ' प्रतितिष्ठति प्रजया पशुभिर्य एवं वेद '
॥ २ ॥

त्रयो वै वषट्कारा ' वज्रो धामच्छद्रिक्तः[12] ' स यदेवोच्चैर्बलं[13] वषट्करोति स वज्रस्तं तं प्रहरति द्विषते भ्रातृव्याय वधं यो ऽस्य स्तृत्यस्तस्मै[14] स्तरीतवे[15] ' तस्मात्स भ्रातृव्यवता[16] वषट्कृत्यो ' ऽथ यः[17] समः[18] संततो निर्हाणाच्छत्स्व[19] धामच्छत्तं तं प्रजाश्च पशवश्चानूपतिष्ठन्ते[20] ' तस्मात्स[21] प्रजाकामेन पशुकामेन वषट्कृत्यो ' ऽथ येनैव

---

1) वषट्का° D; 2) वा ऋतवः D; 3) °धात्यनुषु D; 4) So corr.; die hss. वैत; 5) व E; 6) वषट्करो प्रति A pr. m.; वषट्प्र° D und E; D fügt न ein; 7) °रिक्षे D; 8) So corr.; die hss. सत्येन; 9) तद्रदेवतान्याः D; 10) Fehlt in D; 11) So corr.; die hss. प्रतिष्ठ°; 12) धमच्छ° D; 13) So corr.; die hss. ब्रल; 14) सृत्य° D; 15) स्तरीस्तवे F; 16) °व्यवताय D; भ्रातृव्यप्ता E; 17) यत् A sec. m.; यात् A pr. m.; 18) So corr.; die hss. सयः; 19) Korrupt!; 20) पश्रावश्चाश्चनूप° E; 21) तस्मात्सं D.

षडपराध्नोति[1] स रिक्तो[2] ' रिणक्त्यात्मानं[3] रिणक्ति यजमानं[4] ' पापीयान्वषट्कर्ता भवति पापीयान्यस्मै वषट्करोति' तस्मात्तस्याशां नेयात्किं स्वित्स यजमानस्य पापभद्रमाद्रियेतेति ह स्माह यो ऽस्य वषट्कर्ता भवत्यत्रैवैनं[5] यथा कामयेत तथा कुर्याद्यं कामयेत यथैवानीजानो[6] ऽभूत्तथैवेजानः स्यादिति यथैवास्यर्चं ब्रूयात्तथैवास्य वषट्कुर्यात्समानमेवैनं तत्करोति ' यं कामयेत पापीयान्स्यादित्युच्चैस्तरामस्यर्चं ब्रूयान्नीचैस्तरां वषट्कुर्यात्पापीयांसमेवैनं तत्करोति ' यं कामयेत श्रेयान्स्यादिति नीचैस्तरामस्यर्चं ब्रूयादुच्चैस्तरां वषट्कुर्याच्छ्रेयांसमेवैनं तत्करोति ' श्रिय एवैनं तच्छ्रियमादधाति ' ॥ ३ ॥

यस्यै देवतायै हविर्गृहीतं स्यात्तां मनसा ध्यायन्वषट्कुर्यात्साक्षादेव तद्देवतां प्रीणाति ' प्रत्यक्षाद्देवतां परिगृह्णाति ' संततमृचा वषट्कृत्यं ' संतत्यै ' संधीयते प्रजया पशुभिर्य एवं वेद ' ॥ ४ ॥

वज्रो वै वषट्कारः ' स उ[7] एष प्रहृतो[8] ऽशान्तो दीदाय ' तस्य ह न सर्व एव शान्तिं[9] वेद नो प्रतिष्ठां '

1) पराध्नोति A und F ; °पराध्येति D ; °पराध्नेति E ; 2) ऋक्तो E und F ; 3) रिक्तयात्मानं A, E und F ; 4) So corr. ; die hss. यजमानस्य ; 5) °त्रैवेन D ; 6) यथैवानीयो F ; 7) Fehlt in E ; 8) प्रकृत D ; प्रहूत F ; 9) प्रान्ति F.

तस्माद्वाप्येतर्हि[1] भूयानिव मृत्युस्तस्य हैषैव शान्तिरेषा प्रतिष्ठा यद्वागिति ' वषट्कृत्य वागित्यनुमन्त्रयते ' वषट्कार मा मां प्रमृक्षो[2] माहं त्वां प्रमृक्षं बृहता[3] मन उपह्वये[4] व्यानेन शरीरं प्रतिष्ठीसि[5] प्रतिष्ठां गच्छ[6] प्रतिष्ठां मा गमयेदिति ' तद्ध ह स्माह दीर्घमेवैतत्सदप्रभ्वोजः[7] सह ओज इत्यनुमन्त्रयेतौजश्च ह वै सहश्च वषट्कारस्य[8] प्रियतमे तन्वौ ' प्रियाभ्यामेव तत्तनूभ्यां समर्धयति[9] ' प्रियया तन्वा समृध्यते य एवं वेद ' ॥ ५ ॥

वाक्च वै प्राणापानौ च वषट्कारस्ते[10] वषट्कृते वषट्कृते व्युत्क्रामन्ति ' ताननुमन्त्रयते वागोजः सह ओजो मयि प्राणापानाविति ' वाचं चैव तत्प्राणापानौ च होतात्मनि प्रतिष्ठापयति ' सर्वमायुरेति ' न[11] पुरा जरसः प्रमीयते य एवं वेद ' शं नो भव हृद आ पीत इन्दो[12] पितेव सोम सूनवे सुशेवः । सखेव सख्य उरुशंस धीरः प्र ण आयुर्जीवसे सोम तारीरित्यात्मानं प्रत्यभिमृशतीश्वरो[13] वा एषो[14] ऽप्रत्यभिमृष्टो यजमानस्यायुः प्रत्यव-

---

1) तस्माद्वा° A und F; तस्माद्ददायेतर्हि D; तस्माद्वायेतर्हि E; 2) प्रमृत्ते D; 3) बृहत्ना A; बृहत्या D; 4) अपह्वये D; 5) So corr.; die hss. प्रतिष्ठामि; 6) So corr.; die hss. गच्छन्; 7) So corr.; die hss. °त्सदः प्रभ्वोजः; 8) So corr.; die hss. वषट्कारश्च; 9) समर्द्धयति E; 10) वषट्कारश्च D; 11) म A pr. m.; 12) So corr.; die hss. इन्द्रो; 13) °श्रान्तीश्वरो D; 14) एषा F.

ह्वर्तुमनर्ह्वन्मा[1] भक्षयेदिति ' तद्यदेतेन प्रत्यभिमृशत्यायुरे-वास्मै तत्प्रतिरत[2] ' आप्यायस्व सं ते पयांसीति द्वाभ्यां चमसानाप्याययन्त्यभिरूपाभ्यां ' यद्यज्ञे ऽभिरूपं तत्समृद्धम् ' ॥ ६ ॥

प्राणा वा ऋतुयाजास्तं यदृतुयाजैश्चरन्ति प्राणानेव तद्यजमाने दधति ' षड्ऋतुनेति[3] यजन्ति ' प्राणमेव तद्यजमाने दधति ' चत्वार ऋतुभिरिति[4] यजन्त्यपानमेव तद्यजमाने दधति ' द्विर्ऋतुनेत्युपरिष्टाद्व्यानमेव तद्यजमाने दधति ' स[5] चासु संभृतस्त्रेधा विहृतः प्राणो ऽपाणो व्यान इति ' ततो ऽन्यत्र[6] गुणितस्तथा ह यजमानः सर्वमायुरेत्यस्मिंल्लोक आर्ध्नोत्याप्नोत्यमृतत्वमक्षितं स्वर्गे लोके ' ते वा एते प्राणा एव यदृतुयाजास्तस्मादनवानन्तो[7] यजन्ति ' प्राणानां सन्तत्यै ' सन्तता इव[8] ह्रीमे प्राणा ' अथो ऋतवो वा ऋतुयाजाः ' संस्थानुवषट्कारो ' यो ऽत्रानुवषट्कुर्यादसंस्थितानृतून्संस्थापयेद्यंस्तं तत्र ब्रूयादसंस्थितानृतून्समतिष्ठिपदुःषमं[9] भविष्यतीति शश्वत्तथा स्यात् ' ॥ ७ ॥

तदाहुर्यद्धोता यक्षद्धोता यक्षदिति मैत्रावरुणो होत्रे

1) So corr.; die hss. प्रत्यविहर्तुर्मनरिहन्मा ; 2) °रय D ; 3) षडृतूनेव D ; 4) इति fehlt in den hss. ; 5) सा D ; 6) ऽन्यत A pr. m. ; 7) °नवानं ततो E ; 8) एव D ; 9) So corr. nach Ait. Br. II 29. 7 ; die hss. °न्समतिस्तियो दुःस्वमं ; D समतिष्टिपादुःस्वमं .

प्रेष्यत्यथ कस्माद्धोतृभ्यः सद्भ्यो होत्राशंसिभ्यो होता यजद्धोता यजदिति प्रेष्यतीति ' वाग्वै होता वाक्सर्व ऋत्विजो ' वाग्यजद्वाग्यजदित्यथो[1] सर्वे वा एते सप्त होतारो ऽपि वा[2] ऋचाभ्युदितं सप्त होतार ऋतुथा[3] यजन्तीत्यथ य[4] उपरिष्टाद्द्वादशर्चजामितयि[4] ' ते वै द्वादश भवन्ति ' द्वदश[5] वै[6] मासाः संवत्सरः ' संवत्सरः प्रजापतिः ' प्रजापतिर्यज्ञः ' स यो ऽत्र भक्षयेद्यस्तं तत्र ब्रूयाद्शान्तो भक्षो ऽनानुवषट्कृत आत्मानमन्तरगान्न[7] जीविष्यतीति तथा ह स्याद्यो वै भक्षयेत्प्राणो भक्षः प्राण आत्मानमन्तरगादिति तथैव[8] भवति ' लिम्पेद्विवैवावजिघ्रेदत्र[9] च[10] द्विदेवत्येषु[11] चेति ' तद्ध तत्र शासनं[12] वेदयन्ते ' ऽथ यदमू व्यभिचरतो[13] नान्योन्यमनुप्रपद्येते[14] अध्वर्यू तस्मादृतुर्ऋतुं[15] नानुप्रपद्यते[16] ॥ ८ ॥

प्रजापतिर्वै यत्प्रजा असृजत ता वै तान्ता असृजत ' ता हिंकारेनैवाभ्यजिघ्रत्ताः[17] प्रजा अश्वमारंस्तद्वध्यते[4]

---

1) वाग्यजा° A pr. m. und F; °यजादित्यथो D; 2) व D; वा E; 3) ? ?; 4) Korrupt; 5) द्वदर्श A; 6) ह वे D; 7) °न्तरंगान् D; 8) A, E und F fügen ह ein; 9) So corr.; die hss. लिम्पेदितेवावजि°; °घ्रेत्तत्र A, D und F; °घ्रेतत्र E; 10) So corr.; die hss. तद्ध; 11) द्विदेवतेषु A, D und F; 12) शा: सनं E; 13) °चरितो D; 14) °प्रपाद्यते D; 15) °दृतुर्ऋतुर् A, D und E; 16) °द्येते A, E und F; °द्यत D; 17) °जिघ्रंस्ताः D.

वा एतद्यज्ञो यद्धवींषि पच्यन्ते यत्सोमः सूयते[1] यत्पशुरालभ्यते । हिंकारेण वा एतत्प्रजापतिर्हुतमभिजिघ्रति[2] यज्ञस्याहुततायै[3] यज्ञस्यार्त्यै यज्ञस्य वीर्यवत्ताया[4] इति । तस्माद्[5] हिंक्रियते । तस्माद् य[6] एव पिता पुत्राणां सूर्जति स[7] श्रेष्ठो भवति[8] । प्रजापतिर्हि तमभिजिघ्रति । यच्छकुनिराण्डमध्यास्ते[9] यन्न[10] सूयते[11] तद्धि सापि[12] हिंकृणोत्यथो खल्वाहुर्महर्षिर्वा[13] एतद्यज्ञस्याग्रे[14] गेयमपश्यत्तदेतद्यज्ञस्याग्रे[15] गेयं यद्धिंकारस्तं देवाश्च ऋषयश्चाब्रुवन्वसिष्ठो[16] ऽयमस्तु यो नो यज्ञस्याग्रे गेयमद्रागिति[17] । तदेतद्यज्ञस्याग्रे[18] गेयं यद्धिंकारस्ततो वै स देवानां श्रेष्ठो ऽभवद्येन वै श्रेष्ठस्तेन वसिष्ठस्तस्माद्यस्मिन्वासिष्ठो ब्राह्मणः[19] स्यात्तं[19] दक्षिणाया[20] नान्तरीयात्तथा ह्यस्य प्रीतो हिंकारो भवत्यथ[21] देवाश्च ह वा ऋषयश्च यदृक्सामे अपश्यंस्ते ह स्मैते अपश्यंस्तौ यत्रैते अपश्यंस्तत

---

1) श्रूयते D; 2) So corr.; die hss. °र्हितमभि; statt अभिजिघ्रति ist ein Impf. oder Perf. zu erwarten; 3) °हुतायै F; 4) So corr.; die hss. °त्तया; 5) तस्मा D; 6) ? ? vielleicht यम्; 7) Fehlt in F; 8) भवन्ति F; 9) °मध्य आस्ते A pr. m.; D und E; 10) यन्नः A pr. m.; 11) श्रूयते D; 12) ? D स्यापि; 13) °हर्षेर्वा E; 14) य तद्यज्ञ D; 15) गयमप° D; 16) ऋषयश्चब्रु° E; 17) गेयमस्याद्रागिति F; 18) तद्यदेतद्य° A pr. m. und F; 19) ब्राह्मणास्यातं F; 20) दक्षिणाया A, D und F; 21) °त्यथा D.

एवैनं सर्वं[1] दोह्रमडुहंस्ते वा एते डुग्धे यातयामे ये ऋक्सामे ' ते हिंकारेणैवाप्याययेते ' हिंकारेण वा ऋक्सामे आपीने यजमानाय दोहं डुहाते ' तस्माडु हिंकृत्याध्वर्यवः सोममभिषुण्वन्ति ' हिंकृत्योद्गातारः साम्ना स्तुवन्ति ' हिंकृत्योक्थश[2] ऋचार्त्विज्यं कुर्वन्ति ' हिंकृत्याथर्वाणो ब्रह्मत्वं कुर्वन्ति ' तस्माडु हिंक्रियते ' प्रजापतिर्हि तमभिजिघ्रत्यंथो[3] खल्वाहुरेको वै प्रजापतेर्व्रतं बिभर्ति गौरेव ' तडुभये पशव उपजीवन्ति ये च ग्राम्या ये[4] चारण्या इति ' ॥ १ ॥

देवविशः कल्पयितव्या इत्याहुश्छन्दश्छन्दसि प्रतिष्ठाप्यमिति ' शंसावोमित्याह्वयते प्रातःसवने त्र्यक्षरेण ' शंसावो दैवेत्यध्वर्युः प्रतिगृणाति पञ्चाक्षरेण[5] ' तदष्टाक्षरं[6] संपद्यते ' ऽष्टाक्षरा वै गायत्री ' गायत्रीमेवैतत्पुरस्तात्प्रातःसवने ऽचीक्लृपतामुक्थं वाचीत्याह[7] शस्त्वा चतुरक्षरमोमुक्थशा इत्यध्वर्युः प्रतिगृणाति चतुरक्षरं ' तदष्टाक्षरं संपद्यते ' ऽष्टाक्षरा वै गायत्री[8] ' गायत्रीमेवैतडुभयतः प्रातःसवने ऽचीक्लृपतामध्वर्यो शंसावोमित्या-

1) सर्व D; 2) So corr.; die hss. °ग्रास; 3) तमभिजिघ्रत्ययो E; 4) य D; 5) So corr.; die hss. °क्षरं; 6) Fehlt in F; 7) वाचीन्त्याह E; 8) Fehlt in A, E und F.

ह्वयते माध्यंदिने षडक्षरेण' शंसावो दैवेत्यध्वर्युः प्रतिगृणाति पञ्चाक्षरेण[1]' तदेकादशाक्षरं[2] संपद्यत' एकादशाक्षरा[3] वै त्रिष्टुप्त्रिष्टुभमेवैतत्पुरस्तान्माध्यंदिने[4] ऽचीक्लृपतामुक्थं वाचीन्द्रायेत्याह शस्त्वा षडक्षरमोमुक्थशा यज्ञेत्यध्वर्युः प्रतिगृणाति पञ्चाक्षरं' तदेकादशाक्षरं संपद्यत' एकादशाक्षरा वै त्रिष्टुप्त्रिष्टुभमेवैतदुभयतो माध्यंदिने ऽचीक्लृपतामध्वर्यो शंशंसावोमित्याह्वयते तृतीयसवने सप्ताक्षरेण' शंसावो दैवेत्यध्वर्युः प्रतिगृणाति पञ्चाक्षरं' तद्द्वादशाक्षरं संपद्यते' द्वादशाक्षरा वै जगती[5]' जगतीमेवैतत्पुरस्तात्तृतीयसवने ऽचीक्लृपतामुक्थं[6] वाचीन्द्राय देवेभ्य इत्याह शस्त्वा नवाक्षरमोमुक्थशा[7] इत्यध्वर्युः प्रतिगृणाति त्र्यक्षरं' तद्द्वादशाक्षरं संपद्यते' द्वादशाक्षरा[8] वै जगती' जगतीमेवैतदुभयतस्तृतीयसवने ऽचीक्लृपतामित्यैतद्धि तच्छन्दश्छन्दसि प्रतिष्ठापयति' कल्पयत्येव देवविशो य एवं वेद' तदप्येषाभ्यनूक्ता यद्गायत्रे अधि गायत्रमाहितमिति' ॥ १० ॥

अथैतन्नाना छन्दांस्यन्तरेण गर्ता इवाथैते स्थविष्ठे[9]

---

1) So corr.; die hss. °क्षरं; 2) °क्षरां A pr. m.; 3) °ग्राक्षर D; 4) °त्पुरस्तन्मा° E; 5) Fehlt in D; 6) ऽचीक्लृप्तामुक्थं E; 7) ?, ओमुक्थशा ist viersilbig; Kauṣ. Br. XIV 3 hat उक्थशा; 8) °क्षरां E; 9) अविष्ठे A pr. m., D, E und F.

बलिष्ठे नान्तरे[1] देवते[2] ' ताभ्यां प्रतिपद्यते ' तद्गर्तस्कन्दं रोहस्य रूपं स्वर्ग्यं[3] ' तदनवानं[4] संक्रामेदमृतं वै प्रणवो[5] 'ऽमृतेनैव तन्मृत्युं तरति ' तद्यथा मत्येन[6] वा वंशेन[7] वा गर्तं[8] संक्रामेदेवं तत्प्रणवेनोपसंतनोति[9] ' ब्रह्म ह वै प्रणवो ' ब्रह्मणैवास्मै तद्ब्रह्मोपसंतनोति ' शुद्धः[10] प्रणवः स्यात्प्रजाकामानां ' मकारान्तः प्रतिष्ठाकामानां ' मकारान्तः प्रणवः स्यादिति हैक आहुः ' शुद्ध इति त्वेव स्थितो ' मीमांसितः प्रणवो[11] 'ऽयात इह शुद्ध इह पूर्ण इति ' शुद्धः प्रणवः स्याच्छंस्त्रानुवचनयोर्मध्य[12] इति ह स्माह कौषीतकिस्तथा संहितं भवति ' मकारान्तो ऽवसानार्थे[13] ' प्रतिष्ठा वा अवसानं ' प्रतिष्ठित्या एवाथोभयोः कामयोराप्त्या ' एतौ वै छन्दःप्रवाहावावरं छन्दः परं[14] छन्दो ऽतिप्रवहतस्तस्यायुर्न[15] हिनस्ति ' छन्दसां छन्दो ऽतिप्रोढं[16] स्यात्तत्रैव[17] यं द्विष्यात्तं मनसा प्रैव विध्येच्छन्दसां कृत्तत्रे[18] द्रवति वा[19] सं[19] वा शी-

1) ? नान्तर D; नान्तरेण E; vielleicht अनार्ते; 2) So corr. nach K. Br.; die hss. lesen व्रते; 3) So corr. die hss. स्वर्यं; 4) So corr.; die hss. तदनुवानं; 5) प्राणवो D und E; 6) So corr. nach Kauś. Br. XI 4; die hss. lesen मन्तेण; 7) वंसेन D und E; 8) गर्भे E; 9) प्रणावनो° D; प्रणावैनो° E; 10) शुद्रः A; 11) प्राणावो E; 12) स्याच्छास्त्रानु° E; 13) °नार्थं E; 14) पर D; 15) °स्तस्त्वायुर्न E; 16) ऽतिप्रोढं A; 17) Die hss. °चतैव; 18) So corr.; die hss. क्रन्दत्रे; E क्रन्दत्रै; 19) So corr.; die hss. वाचं.

र्यत इति ' त्रिः प्रथमां त्रिरुत्तमामन्वाह ' यज्ञस्यैव तद्ब-र्हिसो[1] नह्यति ' स्थेम्ने[2] बलायाविस्रंसाय ' यद्यपि छन्दः प्रातःसवने युज्येतार्धर्चश एव[3] तस्य शंस्यं[4] गायत्र्या रूपेणांयो[5] प्रातःसवनरूपेणेति ' न त्रिष्टुब्जगत्यावेतस्मिन्स्थाने ऽर्धर्चशस्ये[6] यत्किंचिच्छन्दः प्रातःसवने युज्येतां[7] पच्छ एवैनयोः शस्यमिति[8] सा स्थितिः ' ॥ ११ ॥

अथात एकाहस्य प्रातःसवनं ' प्रजापतिं[9] ह वै यज्ञं तन्वानं बहिष्पवमान एव मृत्युर्मृत्युपाशेन[10] प्रत्युपाक्रामत ' स आग्नेय्या गायत्र्याज्यं प्रत्यपद्यत ' मृत्युर्वाव[11] तं[12] पश्यन्प्रजापतिं[13] पर्यक्रामत्तं[14] सामाज्येष्ठसीदत्स[15] वायव्या प्रउगं प्रत्यपद्यत ' मृत्युर्वाव तं[16] पश्यन्प्रजापतिं[17] पर्यक्रामत्तं माध्यंदिने पवमाने ऽसीदत्स ऐन्द्र्या[18] त्रिष्टुभा[19] मरुत्वतीयं प्रत्यपद्यत ' मृत्युर्वाव तं[16] पश्यन्प्रजापतिं[20] पर्यक्रामत्स तेनैव द्रविणे पूर्वौ निष्केवल्यस्य स्तोत्रियमासीदत्तमस्तृणोत्तस्माद्ध य एव पूर्वमासीदति

1) Korrupt; Ait. Br. तद्ब्रर्सं; 2) स्थेन्ने D; 3) एवं A sec. m.; 4) शंस्यां E; 5) रूपेपार्यो E; 6) °शस्य D; 7) युज्यतां F; 8) शंस्यमिति A pr. m.; ??; 9) °पति E; 10) मृत्युं मृत्यु° A, E und F; 11) °र्वावा E; 12) द्दं A pr. m.; D und E; द्दे F; 13) पश्यत्प्रजा° E; 14) पर्यक्रमत्तं D; 15) ?? vielleicht सामाज्येष्वसीदत्स; 16) द्दं A pr. m. und D; 17) पस्यत्प्र° E; 18) ऐन्द्रा D; 19) तष्टुभा E; 20) पस्यत्प्र° E.

स तत्स्तृणुते विद्वान्मृत्युरनवकाशमपाद्रवदशंसदितरो निष्केवल्यं ' तस्मादेकमेवोक्थं[1] होता मरुत्वतीयेन[2] प्रतिपद्यते निष्केवल्यमेवात्र हि प्रजापतिं[3] मृत्युर्व्यजहात् ' ॥ १२ ॥

मित्रावरुणावब्रवीद्युवं न इमं[4] यज्ञस्याङ्गमनुसमाहरतं[5] मैत्रावरुणीयां ' तथेत्यब्रूतां ' तौ सयुजौ सबलौ भूत्वा प्रासहा[6] मृत्युमत्यैतां[7] ' तौ ह्यस्यैतद्यज्ञस्याङ्गमनुसमाहरतां मैत्रावरुणीयां ' तस्मान्मैत्रावरुणः प्रातःसवने मैत्रावरुणानि शंसति ' तौ ह्यस्यैतद्यज्ञस्याङ्गमनुसमाहरतां ' यद्वेव मैत्रावरुणानि शंसति प्रति वां सूर उदिते विधेम नमोभिर्मित्रावरुणोत हव्यैरुत वामुषसो बुधि[8] साकं सूर्यस्य रश्मिभिरित्यृचाभ्यनूक्तमा नो मित्रावरुणा नो गन्तं[9] रिशादसेति[10] मैत्रावरुणस्य स्तोत्रियानुरूपौ ' प्र वो मित्राय गायतेत्युक्थमुखं[11] ' प्र मित्रयोर्वरुणयोरिति पर्यास ' आ यातं मित्रावरुणेति यजत्येते एव तद्देवते यथाभागं प्रीणाति ' वषट्कृत्यानुवषट्करोति ' प्रत्येवाभिमृशन्ते[12] ' नाप्याययन्ति ' न ह्यनाराशंसाः सीदन्ति ' ॥ १३ ॥

---

1) तस्मादेका° D; 2) मसचतीयेन D; 3) प्रजापति F; 4) इम E; 5) So corr.; die hss. °रतां; 6) प्रसहा D; 7) मृत्यम° E; 8) बुधिः E; 9) गन्त D; 10) रिशादासोति A pr. m.; 11) °त्युक्तमुखं E; 12) प्रत्यवा° D.

इन्द्रमब्रवीत्त्वं न इमं[1] यज्ञस्याङ्गमनुसमाहर[2] ब्राह्मणाच्छंसीयां ' केन सहेति[3] ' सूर्येणेति ' तथेत्यब्रूतां ' तौ सयुजौ सबलौ भूत्वा[4] प्रासहा मृत्युमत्यैतां ' तौ ह्यस्यैतद्यज्ञस्याङ्गमनुसमाहरतां[5] ब्राह्मणाच्छंसीयां ' तस्माद्ब्राह्मणाच्छंसी प्रातःसवन ऐन्द्राणि सूर्यन्यङ्गानि शंसति ' तौ ह्यस्यैतद्यज्ञस्याङ्गमनुसमाहरतां[5] ' यद्वेवैन्द्राणि सूर्यन्यङ्गानि शंसतीन्द्र पिब प्रतिकामं सुतस्य[6] प्रातःसावस्तव हि पूर्वपीतिरित्यृचाभ्यनूक्तमा[7] याहि सुषुमा हि त आ नो याहि सुतावत[8] इति ब्राह्मणाच्छंसिन स्तोत्रियानुरूपावंयमु त्वा विचर्षण इत्युक्थमुखमुद्धेदभिश्रुतामघमिति[9] पर्यास ' इन्द्र क्रतुविदमिति यजत्येते एव तद्देवते यथाभागं प्रीणाति[10] ' वषट्कृत्यानुवषट्करोति ' प्रत्येवाभिमृशन्ते[11] ' नाप्याययन्ति ' न ह्यनाराशंसाः सीदन्ति ' ॥ १४ ॥

इन्द्राग्नी अब्रवीद्युवं न इमं यज्ञस्याङ्गमनुसमाहरतमच्छावाकीयां[12] ' तथेत्यब्रूतां ' तौ[13] सयुजौ[14] सबलौ[15] भूत्वा प्रासहा मृत्युमत्यैतां ' तौ[16] ह्यस्यैतद्यज्ञस्याङ्गमनुस-

1) इम D; 2) So corr.; die hss. °समाहरन्; 3) सहीति E; 4) सभूत्वा A und F; 5) °समहारतां D; 6) सूतस्य A; 7) °नूक्तामा F; 8) सुतवत A pr. m.; 9) °तामध्यमिति E; 10) प्रीणाते D; 11) °मृशान्त D; 12) So corr.; die hss. °समाहरताम°; 13) तो D und F; 14) सयुजो D; 15) सबलो D; 16) तो D.

माहरतामच्छावाकीयां[1] 'तस्मादच्छावाकः[2] प्रातःसवन ऐन्द्राग्नानि शंसति' तौ[3] ह्यस्यैतद्यज्ञस्याङ्गमनुसमाहरतां[4] ' यद्वेवैन्द्राग्नानि[5] शंसति प्रातर्यावभिरागतं देवेभिर्जेन्यावसू इन्द्राग्नी सोमपीतय इत्यृचाभ्यनूक्तमिंद्राग्नी श्रागतं' तोषा वृत्रहणा हुव इत्यच्छावाकस्य स्तोत्रियानुरूपाविन्द्राग्नी श्रपसस्परीत्युक्थमुखमिंहेन्द्राग्नी[6] उपह्वय[7] इति पर्यास' इन्द्राग्नी श्रागतमिति यजत्यैते एव तद्देवते यथाभागं प्रीणाति ' वषट्कृत्यानुवषट्करोति ' प्रत्येवाभिमृशन्ते[8] ' नाप्याययन्ति ' न ह्यनाराशंसाः सीदन्ति ' ॥ १५ ॥

श्रथ शंसावोमिति स्तोत्रियायानुरूपायोक्थमुखाय[9] परिधानीयाया[10] इति चतुश्चतुराह्वयन्ते[11] ' चतस्रो वै दिशो[12] ' दिक्षु तत्प्रतितिष्ठन्त्यथो[13] चतुष्पादः पशवः ' पशूनामाप्त्या ' श्रथो चतुष्पर्वाणो[14] हि प्रातःसवने होत्रकास्तस्माच्चतुः सर्वे गायत्राणि शंसन्ति[15] ' गायत्रं हि प्रातःसवनं ' सर्वे समवतीभिः परिदधति ' तद्यत्समवतीभिः

---

1) So corr.; die hss. °समहारताम°; 2) °च्छवाकः E; 3) तो D; 4) °समहारतां D; 5) यद्वद्वैन्द्रा° D; यद्वैवैन्द्रा° E; 6) °न्द्राग्नीं E; 7) उपहूय E; 8) °मृशते E; 9) स्तोत्रियानु° F; 10) परीधा° E; 11) °रहूयन्ते E; 12) Fehlt in D; 13) So corr.; die hss. तत्प्रतिष्ठ°; 14) °र्वाणो D und E; 15) शंसति D.

परिदधत्यंतो[1] वै पर्यासो ऽन्त उदर्को ऽन्तेनैवान्तं[2] परिदधति[3] सर्वे मद्वतीभिर्यजन्ति[4] तद्यन्मद्वतीभिर्यजन्ति[5] सर्वे सुतवतीभिः[6] पीतवतीभिरभिरूपाभिर्यजन्ति यद्यज्ञे ऽभिरूपं तत्समृद्धं सर्वे ऽनुवषट्कुर्वन्ति स्विष्टकृत्वानुवषट्कारो[7] नेत्स्विष्टकृतमन्तरयामेत्ययं वै लोकः प्रातःसवनं तस्य पञ्च दिशः पञ्चोक्थानि प्रातःसवनस्य स एतैः पञ्चभिरुक्थैरेताः पञ्च दिश आप्नोत्येताः पञ्च दिश आप्नोति ॥ १६ ॥

घ्नन्ति[8] वा एतत्सोमं यदभिषुण्वन्ति यज्ञं वा एतद्घ्नन्ति यद्दक्षिणा नीयन्ते यज्ञं वा एतद्दक्षयन्ति[9] तद्दक्षिणानां दक्षिणात्वं स्वर्गो वै लोको माध्यंदिनं[10] सवनं यन्माध्यंदिने सवने दक्षिणा नीयन्ते स्वर्गस्य लोकस्य समष्ट्यै बहु देयं सेतुं वा एतद्यजमानः संस्कुरुते स्वर्गस्य लोकस्याक्रान्त्यै प्रजाक्रान्त्यै[11] द्वाभ्यां गार्हपत्ये जुहोत्यध्वर्युरस्याक्रान्तेनाक्रामयत्याग्नीध्र्याग्नीध्रीये[12] ऽन्तरिक्षं तेन यन्माध्यंदिने सवने दक्षिणा नीयन्ते स्वर्ग[13] एतेन लोके

1) परिदधात्यन्तो A pr. m.; 2) °वान्त D; 3) °दधाति A pr. m.; 4) मद्वितो° F; 5) तद्यन्मध्वती° D; 6) सूतव° A sec. m.; 7) °कृत्वा अनु° A, E und F; 8) घन्ति E; 9) So corr.; die hss. एताः सन्न क्षियन्ति; 10) मध्यंदिनं D; 11) Fehlt in D; ? vielleicht प्रत्याक्रान्त्यै; 12) °क्रमगत्या° A, E und F; °ग्नेध्रीयेत्य F; 13) स्वर्गा F.

हिरण्यं[1] हस्ते भवत्यथ नयति । सत्यं वै हिरण्यं । सत्येनैवैनं तन्नयत्यग्रेण गार्हपत्यं जघनेन सदो ऽन्तराग्नीध्रीयं च सदश्च । ता उदीचीरन्तराग्नीध्रीयं च सदश्च चात्वालं चोत्सृजन्त्येतेन ह स्म वा अङ्गिरसः स्वर्गं लोकमायंस्ता वा एताः पन्थानमभिवहन्ति । ॥ १७ ॥

अग्नीधे[2] ऽग्रे ददाति । यज्ञमुखं वा अग्नीध्यज्ञमुखेनैव तद्यज्ञमुखं समर्धयति । ब्रह्मणे ददाति । प्राजापत्यो[3] वै ब्रह्मा । प्रजापतिमेव तया[4] प्रीणात्यृत्विग्भ्यो ददाति । होत्रा एव तया प्रीणाति । सदस्येभ्यो ददाति । सोमपीथं[5] तया निष्क्रीणीते । न हि तस्मा अर्हति सोमपीथं[6] तया निष्क्रीणीयाद्यां[7] शुश्रुवुष[8] आर्षेयाय[9] ददाति देवलोके तयार्ध्नोति । यामशुश्रुवुषे[10] ऽनार्षेयाय ददाति मनुष्यलोके तयार्ध्नोति । यामप्रसृताय[11] ददाति वनस्पतयस्तया प्रयन्ते[12] । यां[13] याचमानाय ददाति भ्रातृव्यं तया जिन्वीते[14] । यां भीषा क्षत्रं तया ब्रह्मातीयाद्यां[15] प्रतिनुदन्ते सा

1) हिरण्य D; 2) So corr.; आग्नीध्रे A, D, E und F; अग्नीध्रे A sec. m.; 3) प्रजापत्यो A pr. m. und D; 4) So corr.; die hss. तेन; 5) So corr.; die hss. °पीथस्; 6) °पीथस् A, D und E; 7) यात्रा D; 8) So corr.; शुश्रूषत्र A, D und F; शुश्रूषवेन् E; 9) आर्षयय E; 10) So corr.; die hss. °शुश्रूषवे; 11) न प्रसृत्याय D; 12) प्रयते D; 13) Fehlt in D; 14) ? ? 15) ब्रह्मानी° A sec. m., D und F.

व्याघ्री दक्षिणा' यस्तां पुनः प्रतिगृह्णीयाद्व्याघ्र्येनं[1] भूत्वा प्रव्लीनीयादन्यया सह प्रतिगृह्णीयादथ हैनं न प्रव्लीनाति' ॥ १८ ॥

यद्गां ददाति वैश्वदेवी वै गौर्विश्वेषामेव तद्देवानां तेन प्रियं धामोपैति' यदजं[2] ददात्याग्नेयो वा अजो' ऽग्नेरेव तेन प्रियं धामोपैति' यदविं ददात्याव्यं तेनावजयति[3]' यत्कृतान्नं ददाति मांसं[4] तेन निष्क्रीणीते' यदनो वा रथो वा ददाति[5] शरीरं तेन' यद्वासो[6] ददाति बृहस्पतिं तेन' यद्धिरण्यं ददात्यायुस्तेन वर्षीयः[7] कुरुते' यदश्वं ददाति सौर्यो वा अश्वः' सूर्यस्यैव तेन प्रियं धामोपैत्यन्ततः प्रतिहर्त्रे देयं' रौद्रो वै प्रतिहर्ता' रुद्रमेव तन्निरवजयति[8]' यन्मध्यतः प्रतिहर्त्रे दद्यान्मध्यतो रुद्रमन्ववयजेत्स्वर्भानुर्वा[9] आसुरः[10] सूर्यं तमसाविध्यत्तदत्रिरपनुनोद[11]' तदत्रिरन्वपश्यत्तदात्रेयाय[12] हिरण्यं ददाति तम एव तेनापहते' ऽथो ज्योतिरुपरिष्टाद्धारयति[13]' स्वर्गस्य लोकस्य समष्ट्यै' ॥ १९ ॥

---

1) So corr.; die hss. °द्व्याघ्रीह्येनं; 2) यदज A pr. m.; 3) तेनाप° A pr. m.; E und F; 4) मांस E; 5) Fehlt in den hss.; 6) यद्वागौ D; 7) वर्सयः D; 8) °न्निरवजेयन्ति A pr. m.; 9) रुद्रमन्ववयजत्स्व° F; 10) So corr.; die hss. आसुरिः; 11) °त्रेरपनुनोद E; 12) °त्रेयया D; 13) °द्दारयति D.

अथात एकाह्नस्यैव माध्यंदिनमृक्च[1] वा इदमग्रे साम चास्तां[2] ' सैव नामर्गासीदमो[3] नाम साम ' सा वा[4] ऋक्सामोपावदन्मिथुनं[5] संभवाव प्रजात्या[6] इति ' नेत्यब्रवीत्साम ' ज्यायान्वा अतो मम महिमेति ' ते द्वे भूत्वोपावदतां ' ते न प्रति[7] चन[7] समवदत ' तास्तिस्रो भूत्वोपावदन्यत्तिस्रो भूत्वोपावदंस्तत्तिसृभिः समभवद्यत्तिसृभिः समभवत्तस्मात्तिसृभिः स्तुवन्ति ' तिसृभिरुद्गायन्ति ' तिसृभिर्हि साम[8] संमितं भवति ' तस्मादेकस्य बह्व्यो जाया भवन्ति ' न[9] हैकस्या बहवः सह पतयो ' यद्ध[10] तत्सा[10] चामश्च समवदतां तत्सामाभवत्तत्साम्नः[11] सामत्वं ' सामन्भवति ' श्रेष्ठतां गच्छति ' यो वै भवति स सामन्भवत्यसामन्य इति ह निन्दन्ते ' ते वै पञ्चान्यद्भूत्वा पञ्चान्यद्भूत्वाकल्पेतामाहावश्च हिंकारश्च प्रस्तावश्च प्रथमा चर्गुद्गीथश्च[12] मध्यमा च प्रतीहारश्चोत्तमा च निधनं च वषट्कारश्च ' ते यत्पञ्चान्यद्भूत्वा पञ्चान्यद्भूत्वाकल्पेतां तस्मादाहुः पाङ्क्तो यज्ञः ' पाङ्क्ताः[13] पशव इति ' यद्वु विराजं दशिनीमभिसं-

1) माध्यंदिन सवनमृक्च D; 2) यास्तां E; वास्तां A und D; 3) नामार्ग्रासीदमो A pr. m., E und F; 4) Fehlt in D; 5) ऋक्सामोपावि° D; 6) प्रजापत्या A pr. m. und D; प्राजापत्या E; 7) So corr.; die hss. प्रतिवचनं; 8) सम D; 9) नै E; 10) यद्धैत्तत्सा A; 11) तत्समा° D; 12) So corr. nach Ait. Br., die hss. चोद्गीयश्च; 13) Fehlt in D.

पद्येतां[1] तस्मादाहुर्विराजि[2] यज्ञो दशिन्यां[3] प्रतिष्ठित इति ' षड् बृहत्या[4] प्रतिपद्यते बार्हतो वा एष य[4] एष[4] तपति ' तदेनं स्वेन रूपेण समर्धयति ' द्वे तिस्रः करोति पुनरादायं ' प्रजात्यै[5] रूपं ' द्वाविव वाग्रे भवतस्तत[6] उपप्रजायेते ' ॥ २० ॥

आत्मा वै स्तोत्रियः ' प्रजा अनुरूपः ' पत्नी धाय्या[7] ' पशवः[8] प्रगाथो ' गृहाः सूक्तं ' यदन्तरात्मंस्तन्निवित्प्रतिष्ठा[9] परिधानीयान्नं याज्या ' सो ऽस्मिंश्च लोके भवत्यमुष्मिंश्च[10] प्रजया च पशुभिश्च गृहेषु भवति य एवं वेद ' ॥ २१ ॥

स्तोत्रियं शंसत्यात्मा वै स्तोत्रियः ' स मध्यमया वाचा शंस्तव्य[11] ' आत्मानमेवास्य[12] तत्कल्पयत्यनुरूपं[13] शंसति ' प्रजा वा अनुरूपस्तस्मात्प्रतिरूपमनुरूपं कुर्वन्ति ' प्रतिरूपो हैवास्य प्रजायामाजायते नाप्रतिरूपस्तस्मात्प्रतिरूपमनुरूपं कुर्वन्ति ' स उच्चैस्तरामिव शंस्तव्यः[14] ' प्रजामेवास्य तच्छ्रे-

---

1) दशनौ° A, D und E; °पद्यते याता A pr. m. und F; °पद्ये यातां A sec. m. und E; 2) So corr.; die hss. °विरजो; 3) दशन्यां A, E und F; 4) Fehlt in F; 5) प्रजापत्यौ A pr. m.; 6) भवति तत A pr. m.; तत fehlt in D; 7) धाया E; 8) वयवः D; 9) °त्प्रतिष्ठां D; A pr. m. fügt वै ein; 10) भवन्ति interpolation; 11) संस्तव्यं A pr. m.; 12) °वास्या A pr. m.; 13) यत्कल्प° D; 14) शंस्तव्या E.

यस्तीं करोति' धाय्यां शंसति' पत्नी वै धाय्या' सा नीचैस्तरामिव शंस्तव्याप्रतिवादिनी[1] ह्यैवास्य गृहेषु पत्नी भवति यत्रैवं विद्वान्नीचैस्तरां धाय्यां शंसति' प्रगाथं शंसति' पशवो वै प्रगाथः' स स्वरवत्या वाचा शंस्तव्यः[2]' पशवो[3] वै[3] प्रगाथः[3]' पशवः स्वरः' पशूनामाप्त्यै' सूक्तं शंसति[4]' गृहा वै सूक्तं' प्रतिवीतं' तत्प्रतिवीततमया[5] वाचा शंस्तव्यं[6]' स यद्यपि ह दूरात्पशूंल्लभते[7] गृहानेवैनानाजिगमिषति[8]' गृहा हि पशूनां प्रतिष्ठा' निविदं शंसति[4]' यदन्तरात्मंस्तन्निवित्तंदेवास्य[9] तत्कल्पयति' परिधानीयां शंसति' प्रतिष्ठा वै परिधानीया[10]' प्रतिष्ठायामेवैनं[11] ततः प्रतिष्ठापयति' याज्यया यजत्यन्नं वै याज्यान्नाद्यमेवास्य तत्कल्पयति' मूलं वा एतद्यज्ञस्य यद्धाय्याश्च याज्याश्च' तद्यदन्या अन्या धाय्याश्च याज्याश्च कुर्युरुन्मूलमेव तद्यज्ञं कुर्युस्तस्मात्ताः समान्य एव स्युः ॥ २२ ॥

तदाहुः किंदेवत्यो यज्ञ इत्यैन्द्र इति ब्रूयादैन्द्रे वाव

1) °दिना A sec. m.; °दिनि A pr. m.; 2) शंस्तव्या A pr. man. und E; 3) Fehlt in A; 4) शंसन्ति E; 5) तत्प्रतिवीतं तमया A sec. m. und F; 6) शंस्तव्यः A sec. m. und F; 7) °ल्लभन्ते D; 8) °मिषाति A pr. m.; 9) °त्रद्रूदेवास्य A, D und F; 10) °नीयां A sec. m.; 11) So corr. nach Kauṣ. Br. XV 4; die hss. प्रतिज्ञाया एवैनं.

यज्ञे सति यथाभागमन्या देवता अन्वायंस्ताः[1] प्रातःसवने मरुत्वतीये तृतीयसवने चाथ हैतत्केवलमेवेन्द्रस्य[2] यदूर्ध्वं मरुत्वतीयात्तस्मात्सर्वे निष्केवल्यानि शंसन्ति[3]' यदेव निष्केवल्यानि तत्स्वर्गस्य लोकस्य[4] रूपं' यद्वेव निष्केवल्यान्येकं ह वा अग्रे सवनमासीत्प्रातःसवनमेवाथ हैतं[5] प्रजापतिरिन्द्राय ज्येष्ठाय पुत्रायैतत्सवनं निरमिमीत[6] यन्माध्यंदिनं सवनं[7]' तस्मान्माध्यंदिने सवने सर्वे निष्केवल्यानि शंसन्ति[8]' यदेव निष्केवल्यानि तत्स्वर्गस्य लोकस्य रूपं' यद्वेव[5] निष्केवल्यानि या ह वै देवताः प्रातःसवने होता शंसति ताः शस्त्वा होत्राशंसिनो ऽनुशंसन्ति[9] मैत्रावरुणं[7] तृचं[7] प्रउगे[7] होता[7] शंसति[7]' तदुभयं[7] मैत्रावरुणं[7] मैत्रावरुणो ऽनुशंसत्यैन्द्रं[10] तृचं प्रउगे होता शंसति' तदुभयमैन्द्रमैन्द्रं[11] ब्राह्मणाच्छंस्यनुशंसत्यैन्द्राग्नं[12] तृचं प्रउगे होता शंसति' तदुभयमैन्द्राग्नमैन्द्राग्नमच्छावाको ऽनुशंसत्यथ हैतत्केवलमेवेन्द्रस्य यदूर्ध्वं मरुत्वतीयात्तस्मात्सर्वे[13] निष्केवल्यानि

---

1) ?; vielleicht अन्वायन्ताः; न्ववायंस्ताः A, E und F; 2) हैतत्केवल्यमे° E; 3) शंसति D und E; 4) रूपस्य F; 5) Korrupt; 6) So corr.; die hss. निरमिमत; 7) Fehlt in D; 8) शंसति D; 9) °सति D und E; 10) °त्यैन्द्र F; °त्यैन्द्राग्नं A pr. man.; 11) ऐन्द्रं fehlt in E; 12) ब्रह्मणा° E; 13) °त्सर्व D.

शंसन्ति[1] 'यद्देव निष्केवल्यानि तत्स्वर्गस्य लोकस्य रूपं' यद्देव[2] निष्केवल्यानि यदददेवीरसहिष्ट माया[3] अथाभवत्केवलः सोमो अस्येत्यृचाभ्यनूक्तं 'देवान्ह यज्ञं तन्वाना- नसुररक्षांस्यजिघांसंस्ते[4] ऽब्रुवन्वामदेवं त्वं न इमं यज्ञं दक्षिणतो गोपायेति 'मध्यतो वसिष्ठमुत्तरतो[5] भरद्वाजं' सर्वाननु विश्वामित्रं 'तस्मान्मैत्रावरुणो वामदेवान्न प्रच्यवते[6] वसिष्ठाद्ब्राह्मणाच्छंसी[7] भरद्वाजादच्छावाकः सर्वे विश्वामित्रादेत एवास्मै तदृषयो ऽहरहर्नमगा[8] अप्रमत्ता यज्ञं रक्षन्ति[9] य एवं वेद य एवं वेद' ॥ २३ ॥

॥ इत्यथर्ववेदे गोपथब्राह्मणोत्तरभागे तृतीयः प्रपाठकः ॥

---

ओं कया नश्चित्र आ[10] भुवत्कया त्वं न[11] ऊत्येति[11] मैत्रावरुणस्य स्तोत्रियानुरूपौ 'कस्तमिन्द्र त्वावसुमिति बार्हतः प्रगाथस्तस्योपरिष्टाद्ब्राह्मणं[12] 'सद्यो ह जातो वृषभः कनीन इत्युक्थमुखमेवा त्वामिन्द्र वज्रिन्नत्रेति[13] पर्यास 'उशन्नु षु णः सुमना उपाक इति यजत्येतामेव

1) शंसति D; 2) यद्देव D; 3) यदेवदद्देवी° E; 4) So corr.; die hss. तन्वाना असुर°; 5) वशिष्ठ° D; 6) प्रच्यवते E; 7) वशिष्ठा° D; 8) ? ? °र्नामगा A sec. m., D und F; 9) रक्षति D; 10) च D; 11) नोत्यति D; 12) °दूब्राह्मणा E; 13) वज्रिन्नति D.

तद्देवतां यथाभागं प्रीणाति ' वषट्कृत्यानुवषट्करोति ' प्रत्येवाभिमृशन्त ' नाप्याययन्ति ' न ह्यनाराशंसाः सीदन्ति ' ॥ १ ॥

तं वो दस्ममृतीषहं तव्वा यामि सुवीर्यमिति ब्राह्मणाच्छंसिन[1] स्तोत्रियानुरूपावुद्ध त्ये मधुमत्तमा गिर इति बार्हतः प्रगाथः ' पशवो वै प्रगाथः ' पशवः स्वरः ' पशूनामाप्त्या ' अतो[2] मध्यं वै सर्वेषां छन्दसां बृहती ' मध्यं माध्यंदिनं[3] सवनानां ' तन्मध्येनैव मध्यं समर्धयतीन्द्रः[4] पूर्भिदातिरद्दासमर्कैरित्युक्थमुखमुद्ध[5] ब्रह्माण्येरत अवस्येति पर्यास ' एवेदिन्द्रं वृषणं वज्रबाहुमिति परिदधाति[6] ' वसिष्ठासो[7] अभ्यर्चन्त्यर्कैरित्यन्नं वा अर्को ' ऽन्नाद्यमेवास्मै तत्परिदधाति[8] ' स न स्तुतो वीरवद्धातु गोमदिति ' प्रजां चैवास्मै तत्पशूंश्चाशास्ते ' यूयं पात स्वस्तिभिः सदा न इति स्वस्तिमती रूपसमृद्धा[9] ' एतद्वै[9] यज्ञस्य समृद्धं यद्रूपसमृद्धं यत्कर्म क्रियमाणमृग्यजुर्वाभिवदति ' स्वस्ति तस्य यज्ञस्य पारमश्नुते य एवं वेद यश्चैवंविद्वान्ब्राह्मणाच्छंस्येतया परिदधात्यृजिषी[10] वज्री[11] वृषभस्तुराषाडिति यजत्येतामेव[12] तद्देवतां यथाभागं प्रीणाति '

---

1) ब्रह्मणा° D; 2) ?, अथो ?, अन्तो A sec. m., D und E; 3) मध्यंदिनं D; 4) °यन्तीन्द्रः A; 5) पूर्भिदत्विद्रदा° E; 6) परिदध्यति D; 7) वशिष्टासो D; 8) °दध्यति D; 9) °मृढाव् A und F; man erwartet °मृद्धैतद्वै; 10) परिदध्य° D; 11) वज्रीं A pr. m.; fehlt in F; 12) यजत्येषा° E.

वषट्कृत्यानुवषट्करोति । प्रत्येवाभिमृशन्ते[1] नाप्याययन्ति । न ह्यनाराशंसाः सीदन्ति ॥ २ ॥

तरोभिर्वो[2] विदद्वसुं तरणिरित्सिषासतीत्यच्छावाकस्य स्तोत्रियानुरूपावुदिन्वस्य[3] रिच्यत इति बार्हतः प्रगाथस्तस्योक्तं ब्राह्मणं । भूय इद्वावृधे वीर्यायेत्युक्थमुखमिंमामू षु प्रभृतिं[4] सातये धा इति पर्यासस्तस्य दशमीमुद्धरति । घोरस्य[5] वा आङ्गिरसस्यैतदार्षं[6] नेघन्नं निर्दहेच्छस्यमानं । पिबा वर्धस्व[7] तव घा[8] सुतास[9] इति यजत्यैतामेव तद्देवतां[10] यथाभागं प्रीणाति । वषट्कृत्यानुवषट्करोति । प्रत्येवाभिमृशन्ते[11] । नाप्याययन्ति । न ह्यनाराशंसाः सीदन्ति ॥ ३ ॥

अथाध्वर्यो[12] शंसावोमिति स्तोत्रियायानुरूपाय[13] प्रगाथायोक्थमुखाय परिधानीयाया[14] इति पञ्च कृत्व[15] आह्वयन्ते । पञ्चपदा पङ्क्तिः । पाङ्क्तो यज्ञः । सर्व ऐन्द्राणि त्रैष्टुभानि शंसन्त्यैन्द्रं हि त्रैष्टुभं माध्यंदिनं सवनं । सर्वे सम-

---

1) °मृशन्ति A pr. m. und F; °मृशन्त D; 2) तरोभिर्वा D; 3) So corr.; die hss. °वुदिन्वस्य; 4) प्रभृति D; 5) A pr. m. fügt ह ein; 6) °तदार्षं E; °तदार्षं F; 7) वर्धस्व स्व A pr. m.; 8) धा E; 9) सुता A pr. m.; 10) तद्देवतो E; 11) प्रत्यवाभि° D; 12) °ध्वर्यो A; 13) स्तोत्रियानुरू° A sec. m. und F; 14) °नीयायां E; 15) कृत्वा A sec. m., D und F.

वतीभिः परिदधति[1] ' तद्यत्समवतीभिः परिदधत्यन्तो वै पर्यासो ऽन्त उदर्को ऽन्तेनैवान्तं परिदधति ' सर्वे महतीभिर्यजन्ति ' तद्यन्महतीभिर्यजन्ति सर्वे सुतवतीभिः[2] पीतवतीभिरभिरूपाभिर्यजन्ति यद्यज्ञे[3] ऽभिरूपं तत्समृद्धं ' सर्वे ऽनुवषट्कुर्वन्ति ' स्विष्टकृत्वानुवषट्कारो[4] ' नेत्स्विष्टकृत अन्तरयामेत्यन्तरिक्षलोको माध्यंदिनं[5] सवनं ' तस्य पञ्च दिशः ' पञ्चोक्थानि माध्यंदिनस्य सवनस्य ' स एतैः पञ्चभिरुक्थैरेताः पञ्च दिश आप्नोत्येताः पञ्च दिश आप्नोति ' ॥ ४ ॥

अथ यदोपासनं[6] तृतीयसवन[7] उपास्यन्ते पितॄनेव तेन प्रीणात्युपांशु पात्नीवतस्याग्नीध्रो यजति ' रेतो वै पात्नीवत ' उपांश्विव वै रेतः सिच्यते ' तन्नानुवषट्करोति[8] नेद्रेतः सिक्तं संस्थापयानीत्यसंस्थितमिव[9] वै रेतः सिक्तं समृद्धं ' संस्था वा एषा यदनुवषट्कारस्तस्मान्नानुवषट्करोति[10] ' नेष्टुरुपस्थे धिष्ण्यान्ते वासीनो भक्षयति[11] ' पत्नीभाजनं[12] वै नेष्टाग्नीत्पत्नीषु[13] रेतो धत्ते[14] ' रेतसः सिक्ताः

1) °दधाति A pr. m.; 2) सूतव° A sec. m.; 3) तपसे F; 4) स्विष्टकृत्वा अन° E; 5) माध्यांदिनं A; 6) यदोपसानं D; 7) °सवनं E; 8) °वषट्कारोति D und E; 9) So corr.; die hss. संस्थापयामी°; 10) °ट्कारात्रस्मान्नानु° F; 11) भक्षयन्ति D und E; 12) °भाजन F; 13) नेष्टाग्नीन्य° E und F; 14) धत्तं D.

प्रजाः प्रजायन्ते ' प्रजानां प्रजननाय ' प्रजावान्प्रजननयिष्णुर्भवति[1] ' प्रजात्यै ' प्रजायते प्रजया पशुभिर्य एवं वेद ' ॥ ५ ॥

अथ शाकलाञ्जुह्वति ' तद्यथाहिर्जीर्णायास्त्वचो निर्मुच्येतेषीका वा मुञ्जादेवं हैवैते सर्वस्मात्पाप्मनः संप्रमुच्यन्ते[2] ये शाकलाञ्जुह्वति[3] ' द्रोणकलशे धाना भवन्ति ' तासां हस्तैरादधति[4] ' पशवो वै धानास्ता[5] आहवनीयस्य[5] भस्मान्ते निवपन्ति ' योनिर्वै पशूनामाहवनीयः ' स्व एवैनांस्तद्गोष्ठे निरपक्रमे निदधत्यथ सव्यावृतो[6] ऽसुसोमानाप्याययन्ति ' तान्हात्तर्वेद्यां सादयन्ति[7] ' तद्धि सोमस्यायतनं ' चात्वालादपरेणाध्वर्युश्चमसानद्भिः पूरयित्वोदीचः प्रणिधाय[8] हरितानि तृणानि व्यवदधाति[9] ' यदा वा आपश्चौषधयश्च संगच्छन्ते[10] ऽथ कृत्स्नः सोमः संपद्यते ' ता वैष्णव्यर्चा[11] निनयन्ति ' यज्ञो वै विष्णुर्यज्ञ[12] एवैनमन्ततः प्रतिष्ठापयत्यथ यद्भक्षः प्रतिनिधिं कुर्वन्ति मानुषेणैवैनं[13] तद्भक्षेण दैवं भक्षमन्तर्दधति ' ॥ ६ ॥

---

1) प्रजावान् fehlt in D; प्रजयिष्णु° D; 2) प्रमुच्यन्त इति D; संप्रमुच्यन्त इति A; °मुच्यते E; °मुच्यते इति F; 3) शाकलं जुहुति E; 4) °दधाति A, D und F; 5) धानास्ताआहव° E; 6) सव्यावृते A pr. m.; सव्यावृततो E; 7) सादयति D und E; 8) प्रणीधाय A pr. m.; 9) °दधति F; 10) स गच्छन्तो F; 11) वैष्णुव्यर्चा A und E; 12) °र्यज्ञम् D, E und F; 13) मनुषे° A pr. m.; मानुषेनवैन E.

पूतिर्वा एषो ऽमुष्मिंल्लोके ऽध्वर्युं[1] च यजमानं चा-
भिवहति[2]। तद्यदेनं दध्नानभिजुह्वत्यावभृथमुपहरेयुर्यथा कु-
णपं वात्येवमेवैनं तत्करोत्यथ यदेनं दध्नाभिजुह्वत्यावभृ-
थमुपहरन्ति[3] सर्वमेवैनं सयोनिं संतनुते। समृद्धि[4] संभर-
त्वंभूद्वः[5] सविता वन्धो नु[6] न इति जुहोति। सर्व-
मेवैनं सपर्वाणं संभरति[7]। तिसृभिस्त्रिवृद्धि[8] यज्ञो[8]।
द्रप्सवतीभिरभिजुहोति। सर्वमेवैनं सर्वाङ्गं संभरति[9]।
सौमीभिरभिजुहोति। सर्वमेवैनं सात्मानं[10] संभरति[9]।
पञ्चभिरभिजुहोति। पाङ्क्तो यज्ञो। यज्ञमेवावरुन्द्धे। पाङ्क्तः
पुरुषः। पुरुषमेवाप्नोति। पाङ्क्ताः पशवः। पशुष्वेव प्रतिति-
ष्ठति[11]। प्रतितिष्ठति प्रजया पशुभिर्य एवं वेद। ॥ ७ ॥

अग्निर्वाव यम[12] इयं[13] यमी[14]। कुसीदं वा एतद्यमस्य
यजमान[15] आदत्ते यदोषधीभिर्वेदिं स्तृणाति। तां यदनु-
पोष्य प्रयायाद्घातयेरन्नेनममुष्मिंल्लोके[16]। यमे यत्कुसीदम-
पमित्यमप्रतीत्तमिति[17] वेदिमुपोषतीहैव[18] सन्यमं कुसीदं

1) ऽध्वर्यु E; 2) °वहन्ति E; °हरति E; 3) So corr.; die hss. दध्नानभि°; 4) समृद्धि E; 5) संभरत्व° E und D; 6) नू F; 7) संभरन्ति A, D und F; 8) So corr.; die hss. °स्त्रिवृद्धिर्यज्ञो; 9) °रन्ति A, D und F; 10) So corr.; die hss. स ग्रात्मानं; 11) °तिष्ठन्ति F; 12) यम् A; 13) Fehlt in F; 14) यमी F; 15) यजमानस्य A pr. m.; 16) प्रयायातेरन्ने° F; alle hss. °न्नेनमेमुष्मिंल्लोके; 17) So B. Ind.; die hss. व कुसीद°; °त्तीतमिति D, E und F; 18) So corr.; °पोषन्तीहैव A pr. m.; D und F; वेदिमुपोषधीहैव A sec. m.; वेदिमुपोषधीहैव E.

निरवद्यायानृणो भूत्वा स्वर्गं लोकमेति' विश्वलोप विश्वदावस्य त्वासञ्जुह्वोमीत्याह होतादा[1]' यजमानस्यापराभावाय' यत्तु मिश्रमिव चरन्त्यञ्जलिना सक्तून्प्रदाव्ये जुहुयादेष ह वा अग्निर्वैश्वानरो यत्प्रदाव्यः' स्वस्यामेवैनं तद्योन्यां सादयति' ॥ ८ ॥

अष्टकां विधान्यामेकाष्टकायामपूपं[2] चतुःशरावं पक्त्वा प्रातरेतेन कक्षमुपोषेद्यदि दहति पुण्यसमं भवति' यदि न दहति पापसमं भवत्येतेन ह स्म वा अङ्गिरसः पुरा विज्ञानेन दीर्घसत्त्रमुपयन्ति[3]' यो ह वा उपद्रष्टारमुपश्रोतारमनुख्यातारमेव विद्वान्यजते सममुष्मिंल्लोक इष्टापूर्तेन गच्छते' ऽग्निर्वा उपद्रष्टा' वायुर्वा उपश्रोतादित्यो[4] वा अनुख्याता' तान्य[5] एवं[5] विद्वान्यजते सममुष्मिंल्लोक इष्टापूर्तेन गच्छते' ऽयं नो नभसस्पतिरित्याहाग्निर्वै नभसस्पतिरग्निमेव तदाहैतं नो गोपायेति[6]' स त्वं नो नभसस्पतिरित्याह[7]' वायुर्वै नभसस्पतिर्वायुमेव तदाहैतं नो गोपायेति[8]' देव संस्फानेत्याहादित्यो[9] वै देवः संस्फान' आदित्यमेव तदाहैतं नो गोपायेत्ययं ते योनिरित्यरण्यो-

---

1) ? ? korrupt; 2) विधायान्यामेका° D; 3) दिर्घ° D; 4) उपश्रोता आदि° A sec. m. und D; 5) तान्येवं D; 6) गोपयेति A, D und E; 7) नभसं पति° E; 8) गोपायति D; 9) सस्पाने° F.

रग्निं[1] समारोपयेत्तंदाहुर्यदरण्योः समारूढो नश्येदुदस्याग्निः[2] सीदेत्पुनराधेयः स्यादिति' या ते अग्ने[3] यज्ञिया तनूस्तया मे ह्यारोह[4] तया मे ह्याविशायं[5] ते योनिरित्यात्मन्नग्नीन्समारोपयेदेष[6] ह वा अग्नेर्योनिः[7]' स्वस्यामेवैनं[8] तद्योन्यां सादयति' ॥ १ ॥

यो ह वा अग्निष्टोमं[9] साह्नं[10] वेदाग्निष्टोमस्य साह्नस्य सायुज्यं सलोकतामश्नुते य एवं[11] वेद' यो ह वा एष तपत्येषो ऽग्निष्टोम एष साह्नस्तं सहैवाह्ना संस्थापयेयुः' साह्नो वै नामैष' तेनासंत्वरमाणाश्चरेयुर्यद्ध वा इदं पूर्वयोः सवनयोरसंत्वरमाणाश्चरन्ति तस्माद्धेदं[12] प्राच्यो ग्रामता बहुलाविष्टा' अथ यद्धेदं[13] तृतीयसवने संत्वरमाणाश्चरन्ति तस्माद्धेदं[14] प्रत्यञ्चि[14] दीर्घारण्यानि भवन्ति' यथैव प्रातःसवन एवं माध्यंदिने[15] सवन[16] एवं तृतीयसवन' एवमु ह यजमानो ऽप्रमायुको भवति' तेनासंत्वरमाणाश्चरेयुर्यदा वा एष प्रातरुदेत्यथ मन्द्रतमं तपति'

1) °पयोरग्नीन् A pr. m. und D; 2) °दस्याग्निं D und F; °दस्याग्नी A pr. m.; 3) अग्ने: A, D und F; अग्नि E; 4) त्वारोह A; 5) ह्याविशा अयं D; 6) °ग्नीत्समारो° E; °ग्निंसमारो° A sec. m. F; 7) अग्निर्योनि: A, E und F; 8) स्वदयामेवैनं E; 9) °ष्टोम F; 10) साह्न F; 11) एव E; 12) So corr.; तस्माद्धेद तं A, E und F; तस्माद्धेदत्तं A sec. m. und D; 13) So corr.; die hss. यद्धेदं; 14) So corr.; die hss. प्रत्यक्षेद्; 15) So corr.; die hss. °दिनं; 16) सवनं D.

तस्मान्मन्द्रतमया वाचा प्रातःसवने शंसेदथ यदाभ्येत्यथ बलीयस्तपति ' तस्माद्बलीयस्या वाचा माध्यंदिने सवने शंसेदथो यदाभितरामित्यथ बलिष्ठतमं[1] तपति ' तस्माद्बलिष्ठतमया वाचा तृतीयसवने शंसेदेवं[2] शंसेद्यदि वाच ईशीत[3] ' वाग्घि शस्त्रं ' यया तु[4] वचोत्तरिण्योत्तरिण्योत्सहेत[5] समापनाय[6] तया[7] प्रतिपद्येतैतत्सुशस्ततरमिव भवति ' स वा एष न कदाचनास्तमयति नोदयति ' तद्यदेनं[8] पश्चादस्तमयतीति[9] मन्यन्ते ऽह्न एव तदन्तं[10] गत्वाथात्मानं विपर्यस्यते ' ऽहरेवाधस्तात्कृणुते रात्रीं परस्तात्स वा एष न कदाचनास्तमयति नोदयति ' तद्यदेनं पुरस्तादुदयतीति मन्यन्ते रात्रेरेव[11] तदन्तं गत्वाथात्मानं विपर्यस्यते ' रात्रिमेवाधस्तात्कृणुते ऽहः परस्तात्स वा एष न कदाचनास्तमयति नोदयति[12] ' न ह[13] वै कदाचन[14] निम्रुचत्येतस्य[15] ह सायुज्यं सलोकतामश्नुते य एवं वेद '

॥ १० ॥

---

1) बलीष्टतमं D; 2) Fehlt in A und D; 3) So corr.; ईशन्त A pr. m., D, E und F; ईशात A sec. m.; 4) नु A, D und F; 5) So corr.; die hss. °त्सहेदा; वाचोत्तरण्योत्तरण्या° E und D; 6) समापना F; 7) तवा E; 8) तद्यदेन A pr. m. und F; 9) पश्चादस्तम° A; 10) तदह्नं D; 11) रात्रिरेव D und E; 12) नोदेति E; 13) है A sec. m.; 14) कदाचनं A pr. m. und E; 15) So corr.; die hss. निम्रोचत्येतत्स; ed. B. Ind. निम्लोचत्येतत्स.

अथात एकाहस्यैव तृतीयसवनं ' देवासुरा वा एषु लोकेषु समयतन्त ' ते[1] देवा असुरानभ्यजयंस्ते जिता अहोरात्रयोः संधिं समभ्यवागुः[2] ' स हेन्द्र[3] उवाचेमे वा[4] असुरा[4] अहोरात्रयोः संधिं[5] समभ्यवागुः ' कश्चाहं चेमानसुरानभ्युत्थास्यामहा इत्यहं चेत्यग्निरब्रवीदहं चेति वरुणो ' ऽहं चेति[6] बृहस्पतिरहं चेति विष्णुस्तानभ्युत्थायाहोरात्रयोः[7] संधेर्निर्जघ्नुर्यदभ्युत्थायाहोरात्रयोः संधेर्निर्जघ्नुस्तस्मादुत्था[8] ' अभ्युत्थाय[9] ह वै द्विषन्तं भ्रातृव्यं[10] निर्हन्ति य एवं वेद ' सो ऽग्निरश्वो भूत्वा प्रथमः प्रजिगाय[11] ' यदग्निरश्वो भूत्वा प्रथमः प्रजिगाय[12] तस्मादाग्नेयीभिरुक्थानि प्रणयन्ति ' यदग्निरश्वो भूत्वा प्रथमः प्रजिगाय[11] तस्मात्साकमश्वं[13] ' यत्पञ्च देवता अभ्युत्तस्थुस्तस्मात्पञ्च[14] देवता उक्थे[15] शस्यन्ते[16] ' या वाक्सो ऽग्निर्यः प्राणः स वरुणो ' यन्मनः स इन्द्रो ' यच्चक्षुः स बृहस्पतिर्यच्छ्रोत्रं स विष्णुरेते ह वा एतान्पञ्चभिः प्राणैः समीर्युदस्थापयंस्तस्मादु[17] एवैताः पञ्च देवता[18] उक्थे शस्यन्ते ' ॥ ११ ॥

---

1) ता A pr. m.; 2) ? ?; vielleicht समभ्यवेयुः 3) हेन्द्रं E und F; 4) वासुरा E; 5) संधि D; 6) Fehlt in F; 7) °भ्युत्थाया अहो° D; 8) ? ? E °दुह्ना; vielleicht °दुक्था? 9) अभ्युह्नाय E; 10) भ्रातृव्य A und F; 11) प्रजीगाय E; 12) प्रजगाय D; प्रजीगाय E; 13) °कामस्वं E; 14) अभ्यतस्थु° E; 15) उक्य D; 16) प्रास्यते A pr. m.; 17) So corr.; die hss. समीर्योत्थाप°; 18) देवतां A sec. m. und D.

प्रजापतिर्ह्वैतेभ्यः पञ्चभ्यः प्राणेभ्यो ऽन्यान्देवान्ससृजे[1] यद्ध चेदं[2] किं च पाङ्क्त तत्सृष्ट्वा व्याज्वलयत्तं[3] होचुर्देवा[4] ह्लानो ऽयं पितामयो[5] ऽभूः[5] पुनरिमं समीर्योत्थापयामेति[6] स ह सत्वमाख्यायाभ्युपतिष्ठते[7] यदि ह वा अपि निर्णिक्तस्यैव कुलस्य संध्युह्लेण[8] यजते सत्वं[9] हैवाख्यायाभ्युपतिष्ठते[10] यो वै प्रजापतिः स यज्ञः स एतैरेव पञ्चभिः प्राणैः समीर्योत्थापितो ये ह वा एनं पञ्चभिः प्राणैः समीर्योत्थापयंस्ता उ एवैताः पञ्च देवता[11] उक्थे शस्यन्ते ॥ १२ ॥

तदाहुर्यद्द्वयोर्देवतयो[12] स्तुवत इन्द्राग्न्योरित्यथ कस्माद्भूयिष्ठो[13] देवता उक्थे शस्यन्त इत्यन्तो वा आग्निमारुतमन्तरुक्थान्यन्त[14] आश्विनं[15] कनीयसीषु देवतासु स्तुवते[16] तिष्ठत्यंथ[17] कस्माद्भूयिष्ठो[18] देवता उक्थे श-

---

1) ऽन्यान् fehlt in E; °वान्सृजे F; 2) So ed. B. Ind.; die hss. वेदं; 3) ? ? vielleicht व्यह्वलन्ते; D व्यालयते; F व्याह्लयन्ते; 4) °र्देवान् A und F; 5) ? ? vielleicht पितामहो ऽभूत्; 6) °यामीति A, E und F; 7) ? ? vielleicht °भ्युपातिष्ठत; F °भुपगम्यति; 8) Corrupt; संध्युत्तेणां A und F; सध्युत्तेणा D; 9) So ed. B. Ind.; die hss. सत्वं; 10) °तिष्ठन्ते A pr. m.; 11) देव E; 12) So corr.; die hss. तदाहुर्यद्वयो° E; 13) °यिष्ठा ? ?; 14) अग्निमा° D; ? ? vielleicht °तमन्त उकथान्यन्त; 15) अश्विनं D; 16) So corr.; स्तुवन्ते A pr. m. und E; सुवन्ते A sec. m. und D; स्तवते E; 17) ? ? vielleicht ऽन्तेष्वित्यथ; 18) ? ? °ष्ठा.

स्यन्त इति ' द्वे द्वे उक्थमुखे[1] भवतस्तंच्यद्वे[2] द्वे ' ॥ १३ ॥

अथ यदैन्द्रावारुणं मैत्रावरुणस्योक्थं भवत्यैन्द्राबार्हस्पत्यं ब्राह्मणाच्छंसिन[3] उक्थं भवत्यैन्द्रावैष्णवमच्छावाकस्योक्थं भवति द्वे संशस्यंस्त[4] ऐन्द्रं च वारुणं[5] चैकमैद्रावारुणं[6] भवति[7] ' द्वे संशस्यंस्त ऐन्द्रं च बार्हस्पत्यं चैकमैन्द्राबार्हस्पत्यं भवति ' द्वे संशस्यंस्त ऐन्द्रं च वैष्णवं चैकमैन्द्रावैष्णवं भवति ' द्वे द्वे उक्थमुखे भवतस्तंच्यद्वे द्वे ' ॥ १४ ॥

अथ यदैन्द्रावारुणं मैत्रावरुणस्योक्थं भवतीन्द्रावरुणा सुतपाविमं सुतं सोमं पिबतं मद्यं[8] धृतव्रताविति त्यृचाभ्यनूक्तं ' मद्वद्धि तृतीयसवनमैच्छू[9] षु ब्रवाणि त[10] आग्निरगामि[10] भारत इति मैत्रावरुणस्य[11] स्तोत्रियानुरूपौ ' चर्षणीधृतं मघवानमुक्थ्यमित्युक्थमुखं[12] ' तस्योपरिष्टाद्ब्राह्मणमंस्तभ्नाद्यामसुरो[13] विश्ववेदा[14] इति वारुणं सांशंसिकमंर्द्धं चेति वरुणो[15] ज्ञवीद्दिवतयोः संशं-

---

1) उक्थे मुखे D; 2) So corr.; die hss. °स्तद्यद्वे; 3) ब्राह्माच्छंसिन A, D und F; 4) ? ? viell. संशस्तव्ये; संशस्यं D; शंसयं E; 5) वरुणं D; 6) °वरुणं D; 7) भवन्ति D; 8) मधं A sec. m.; मध्यं A pr. m.; 9) °सवनं मक्षं D; °मेच्छु F; 10) ताग्निरगामि A pr. m.; 11) °रुणास्या A pr. m.; 12) मघवानमुख्यमि° A; °मुझामि E; 13) So corr.; die hss. °भ्नाद्यामसुरो; 14) विश्वे देवा E; 15) वरुणो E.

शायानतिशंसायेन्द्रावरुणा[1] युवमध्वराय न इति पर्यास ऐन्द्रावरुणो ' ऐन्द्रावरुणमस्यैतन्नित्यमुक्थं ' तदेतत्स्वस्मिन्नायतने स्वस्यां प्रतिष्ठायां प्रतिष्ठापयति ' द्वन्द्वं वा एता देवता भूत्वा व्यजयन्त ' विजित्या एवाथो द्वन्द्वस्यैव[2] मिथुनस्य प्रजात्यै ' सैकपादिनी[3] भवत्येकपादिन्या[4] होता परिदधाति ' यत्र होतुर्होत्रकाणां[5] युञ्जन्ति तत्समृद्धं ' तद्धि खल्वावां राजानावध्वरे[6] ववृत्यामित्येवमेव केवलपर्यासं कुर्यात्केवलसूक्तं ' केवलसूक्तमेवोत्तरयोर्भवतीन्द्रावरुणा मधुमत्तमस्येति यजन्त्येते[7] एव तद्देवते यथाभागं प्रीणाति ' वषट्कृत्यानुवषट्करोति ' प्रत्येवाभिमृशन्ते[8] नाप्याययन्ति ' न ह्यनाराशंसाः सीदन्ति ' ॥ १५ ॥

अथ यदैन्द्राबार्हस्पत्यं ब्राह्मणाच्छंसिन उक्थं[9] भवतीन्द्रश्च सोमं पिबतं बृहस्पते ऽस्मिन्यज्ञे मन्दसाना[10] वृषण्वसू इत्यृचाभ्यनूक्तं ' मद्वद्धि तृतीयसवनं ' वयमु त्वामपूर्व्य यो न इदमिदं पुरेति ब्राह्मणाच्छंसिन[11] स्तोत्रियानुरूपौ ' प्र मंहिष्ठाय बृहते बृहद्रय[12] इत्युक्थमुखमै-

---

1) संशंसायानिति° D; 2) द्वन्द्वं स्यैव D; 3) ?? viell. °तिनी; 4) ?? viell. °तिन्या; D भवत्यैक°; 5) °त्रकाणा F; 6) राजानानध्वरे A; राजानामध्वरे E; राजानामध्वर D; 7) यजन्येन A pr. m.; E und F; 8) प्रत्यवाभि° D; 9) उक्थां A pr. m.; 10) मन्दसामाना E; 11) ब्रह्मणाच्छंसिन D; 12) बृहद्रूप F.

न्द्राजागतं[1] ' जागताः पशवः ' पशूनामाप्त्यै ' जागतमु वै तृतीयसवनं ' तृतीयसवनस्य रूपमुदप्रुतो[2] न वयो रक्षमाणा इति बार्हस्पत्यं सांशंसिकमहं[3] चेति बृहस्पतिरब्रवीद्देवतयोः संशंसायानतिशंसायाच्छा[4] म इन्द्रं मतयः स्वर्विद[5] इति पर्यास ऐन्द्राबार्हस्पत्य[6] ' ऐन्द्राबार्हस्पत्यमस्यैतन्नित्यमुक्थं[7] ' तदेतत्स्वस्मिन्नायतने स्वस्यां प्रतिष्ठायां प्रतिष्ठापयति ' द्वन्द्वं वा एता देवता भूत्वा व्यजयन्त[8] ' विजित्या एवाथो द्वन्द्वस्यैव मिथुनस्य प्रजात्यै[9] ' बृहस्पतिर्नः परिपातु पश्चादित्यैन्द्राबार्हस्पत्या परिदधातीन्द्राबृहस्पत्योरेव यज्ञं प्रतिष्ठापयत्युतोत्तरस्मादधरादघायोरिन्द्रः[10] पुरस्तादुत मध्यतो नः सखा सखिभ्यो[11] वरिवः[12] कृणोत्विति ' सर्वाभ्य एव दिग्भ्य आशिषमाशास्ते[13] नार्वी[14] ' यं कामं कामयते सो ऽस्मै कामः समृध्यते य एवं वेद यत्रैवंविद्वान्ब्राह्मणाच्छंस्येतस्या[15] परिदधाति ' बृहस्पते युवमिन्द्रश्च वस्व[16] इति यजत्येते[17] एव तद्देवते

1) °मैंद्रं जागतं D und E; 2) रूपमुद्रुतो D; 3) °सिकामहं F; 4) संशंसायानिति° D; 5) स्वर्वि E; 6) °बार्हस्पत्यं A und F; 7) °त्यमुक्थ D; 8) °यन्ति A pr. m.; 9) प्रजापत्यै A pr. m.; 10) प्रतिष्ठापयत्यथोत्त° F; प्रतिष्ठापयत्युतोत्तरस्मा° D; °रादघायोरिन्द्रः E; 11) सखिभि A; 12) वरीयः A; 13) °माशास्ते D; 14) ? ? D नार्त्वि; 15) याशैवं° D; 16) वस्तु D; 17) यजत्येत A und F.

यथाभागं प्रीणाति ' वषट्कृत्यानुवषट्करोति ' प्रत्येवाभिमृशन्ते[1] नाप्याययन्ति[2] ' न ह्यनाराशंसाः सीदन्ति[3] ' ॥ १६ ॥

अथ यदैन्द्रावैष्णवमच्छावाकस्योक्थं भवतीन्द्राविष्णू मदपती[4] मदानामा सोमं यातं द्रविणो दधानेत्यृचाभ्यनूक्तं ' मद्वद्धि तृतीयसवनमंधा[5] ह्यीन्द्र गिर्वण इयं त इन्द्र गिर्वण इत्यच्छावाकस्य स्तोत्रियानुरूपावृतुर्जनित्री[6] तस्या अपस्परीत्युक्थमुखं[7] ' तस्योक्तं ब्राह्मणं ' नू मर्तो दयते सनिष्यन्निति वैष्णवं सांशंसिकंमंहं[8] चेति विष्णुरब्रवीद्देवतयोः संशंसायानतिशंसाय[9] ' सं वां कर्मणा समिषा हिनोमीति पर्यास ऐन्द्रावैष्णव[10] ' ऐन्द्रावैष्णावमस्यैतन्नित्यमुखं ' तदेतत्स्वस्मिन्नायतने[11] स्वस्यां प्रतिष्ठायां प्रतिष्ठापयति[12] ' द्वन्द्वं वा एता देवता भूत्वा व्यजयन्त ' विजित्या एवाथो द्वन्द्वस्यैव मिथुनस्य प्रजात्या ' उभा जिग्यथुर्न पराजयेथे इत्यैन्द्राविष्णव्यर्चा परिदधातीन्द्राविष्णोरिव[13] यज्ञं प्रतिष्ठापयतीन्द्राविष्णू पिबतं मध्वो अस्येति यजत्यैते[14] एव तद्देवते यथाभागं प्रीणाति '

---

1) प्रत्यवाभि° D; 2) नाथाय° D und E; 3) सीदति E; 4) मदयती E; 5) So corr.; °मधाम A, E und F; °मध्यम D; 6) °तुर्जोनेत्री E; 7) अपपस्परी° A pr. m.; अपसस्परी° D; अपमस्परी° E; 8) °कमिहं D; 9) शंशंसायानिति° D; शंशंसा° E; 10) °वैष्णावं A sec. m. und E; 11) °यतेन D; 12) °पयन्ति A pr. m.; 13) परिदधान्तो° A; 14) यजत्येत A und F.

वषट्कृत्यानुवषट्करोति ' प्रत्येवाभिमृशन्ते[1] ' नाप्याययन्ति[2] ' न ह्यनाराशंसाः सीदन्ति ' ॥ १७ ॥

अथाध्वर्यो शंशंसावोमिति[3] स्तोत्रियायानुरूपायोक्थमुखाय[4] परिधानीयाया[5] इति चतुश्चतुराह्वयन्ते ' चतस्रो वै दिशो[6] ' दिक्षु तत्प्रतितिष्ठन्ते ' ऽथो चतुष्पादः[7] पशवः ' पशूनामाप्त्या ' अथो चतुष्पर्वाणो हि तृतीयसवने होत्रकास्तस्माच्चतुः ' सर्वे त्रैष्टुभं जागतानि[8] शंसन्ति[9] ' जागतं हि तृतीयसवनमथ हैतत्त्रैष्टुभान्यप्रतिभूतमिव[10] हि प्रातःसवने मरुत्वतीये तृतीयसवने च होत्रकाणां शस्त्रं ' धीतरसं[11] वा एतत्सवनं यत्तृतीयसवनमथ हैतदधीतरसं[12] शुक्रियं छन्दो यत्त्रिष्टुबयातयाम[13] ' सवनस्यैव तत्सरसतायै[14] ' सर्वे समवतीभिः परिदधति ' तद्यत्समवतीभिः परिदधत्यन्तो वै पर्यासो ऽन्त उदर्को ऽन्तः सजाया[15] उ[15] ह[15] वा[15] अवैनायांन्तेनैवान्तं[15] परिदधति ' सर्वे मद्वतीभिर्यजन्ति ' तद्यन्मद्वतीभिर्यजन्ति सर्वे सुतवतीभिः[16] पीतवतीभिरभिरूपाभिर्यजन्ति[17] ' यद्यज्ञे[18] ऽभिरूपं '

1) प्रत्यवाभि° D; 2) नाथाययन्ति D; 3) शंशावोमिति A; 4) स्तोत्रियानुरू° A und F; 5) परिदधा° A und F; 6) Fehlt in D; 7) चतुष्पदः F; 8) जगतानि D; 9) शंसति D; 10) ? ? °भूतामिव E; 11) धितरसं A pr. m.; वीतरसं A sec. m. und E; वितरसं D; 12) °धितरसं A pr. m.; 13) So corr.; die hss. यत्त्रिष्टुभाया°; 14) So corr.; die hss. तत्सरस्वतायै; 15) Korrupt; 16) सूतव° A sec. m.; 17) अभिः fehlt in D; 18) वियतत्ते A pr. m.; यदि F.

तत्समृद्धं ' सर्वे ऽनुवषट्कुर्वन्ति ' स्विष्टकृत्वानुवषट्कारो[1] ' ने-त्स्विष्टकृत अन्तरयामेत्यसौ[2] वै लोकस्तृतीयसवनं ' तस्य पञ्च दिशः ' पञ्चोक्थानि तृतीयसवनस्य ' स एतैः पञ्चभिरु-क्थैरेताः पञ्च दिश आप्नोति ' तद्यदेषां लोकानां रूपं या मात्रा तेन रूपेण तया मात्रयेमांल्लोकानृध्नोतीमांल्लोका-नृध्नोतीति[3] ' ॥ १८ ॥

तदाहुः किं षोडशिनः षोडशित्वं[4] ' षोडश स्तोत्राणि षोडश शस्त्राणि षोडशभिरक्षरैरादत्ते[5] ' द्वे[6] वा अक्षरे अतिरिच्येते षोडशिनो ऽनुष्टुभमभिसंपन्नस्य ' वाचो वा एतौ स्तनौ ' सत्यानृते वाव ते ' अवत्येनं[7] सत्यं नैन-मनृतं[8] हिनस्ति य एवं वेद य[9] एवं[9] वेद[9] ' ॥ १९ ॥

॥ इत्यथर्ववेदे गोपथब्राह्मणोत्तरभागे चतुर्थः प्रपाठकः ॥

---

ओमहर्वै देवा आश्रयन्त[10] रात्रीमसुरास्ते[11] समावद्वी-र्या एवासन्नो व्यावर्तन्त ' सो ऽब्रवीदिन्द्रः कश्चाहं चेमा-

---

1) Bibl. Ind. स्विष्टकृत्त्वा अनु°; 2) die hss. °ष्टवतमन्त°; 3) So corr.; die hss. मात्राये°; 4) षोडशीत्वं A pr. m.; 5) षोडशोभि° E; 6) So corr.; die hss. ते; 7) So corr.; die hss. अवत्यैनं; 8) नैतमनृतं A sec. m. und D; 9) Fehlt in E und F; 10) आश्राम्यन्त E; 11) रात्रीस° E.

नसुरात्रात्रीमन्ववैष्यामहे[1] इति ' स देवेषु न[2] प्रत्यविन्ददंबिभयू रात्रेस्तमसो मृत्योस्तंम इव[3] हि रात्रिर्मृत्युर्वै तमस्तंस्माद्धाप्येतर्हि भूयानिव नक्तं स यावन्मात्रमिवापक्रम्य[4] बिभेति ' तं वै छन्दांस्येवान्ववायंस्तंयच्छन्दांस्येवान्ववायंस्तस्मादिन्द्रश्च[5] छन्दांसि च रात्रिं वहन्ति ' न निविच्छस्यते न पुरोरुङ्[6] धाय्या नान्या देवता ' इन्द्रश्च[7] ह्येव छन्दांसि च रात्रिं वहन्ति ' तान्वै पर्यायैः पर्यायमनुदन्त ' यत्पर्यायैः पर्यायमनुदन्त तस्मात्पर्यायास्तंत्पर्यायाणां पर्यायत्वं ' तान्वै प्रथमैरेव पर्यायैः पूर्वरात्रादनुदन्त मध्यमैर्मध्यरात्रादुत्तमैरपररात्रादंपि शर्वर्या अपिस्मसीत्यब्रुवंस्तंयदपि शर्वर्या अपिस्मसीत्यब्रुवंस्तदपिशर्वराणामपिशर्वरत्वं ' शर्वराणि खलु ह वा अस्यैतानि छन्दांसीति ह स्माहैतानि ह वा इन्द्रं रात्र्यास्तमसो मृत्योरभिपत्यावारयंस्तंदपिशर्वराणामपिशर्वरत्वम् ' ॥ १ ॥

प्रथमेषु पर्यायेषु स्तुवते प्रथमान्येव पदानि पुनराददते ' यदेवैषां मनोरथा आसंस्तदेवैषां तेनाददते[8] ' मध्यमेषु पर्यायेषु स्तुवते मध्यमान्येव पदानि पुनराददते ' यदेवैषा-

---

1) °न्ववैयाष्यामहा A sec. m. die hss. °महा; 2) नः D; 3) स व D; 4) So corr.; die hss. °प्रक्रम्य; 5) So corr.; die hss. °दिन्द्रस्य; 6) पुरोरङ्ङ् A pr. m.; D, E und F; 7) So corr.; die hss. इन्द्रस्य; 8) तेनादधाते A pr. m. und E.

मश्वा गाव आसंस्तदेवैषां तेनाददत ' उत्तमेषु पर्यायेषु स्तुवत[1] उत्तमान्येव पदानि पुनराददते ' यदेवैषां वासो हिरण्यं[2] मणिरध्यात्ममासीत्तदेवैषां[3] तेनाददत ' आ द्विषतो वसु दत्ते निरेवैनमेभ्यः[4] सर्वेभ्यो लोकेभ्यो नुदते य एवं वेद ' ॥ २ ॥

पवमानवदहरित्याहुर्न रात्रिः पवमानवती ' कथमुभे पवमानवती भवतः ' केन ते समावद्भाजौ भवत[5] इति ' यदेवेन्द्राय मद्वने सुतमिदं वसो सुतमन्ध इदं ह्यन्वोजसा सुतमिति स्तुवन्ति च शंसन्ति[6] च तेन[7] रात्रिः पवमानवती ' तेनोभे पवमानवती भवतस्तेन ते समावद्भाजौ भवतः ' पञ्चदशस्तोत्रमहरित्याहुर्न रात्रिः पञ्चदशस्तोत्रा ' कथमुभे पञ्चदशस्तोत्रे भवतः ' केन ते समावद्भाजौ भवत इति ' द्वादश स्तोत्राण्यपिशर्वराणि ' तिसृभिर्देवताभिः संधिना राथंतरेणाश्विनाय स्तुवते ' तेन[7] रात्रिः पञ्चदशस्तोत्रा[8] ' तेनोभे पञ्चदशस्तोत्रे भवतस्तेन ते समावद्भाजौ भवतः ' परिमितं स्तुवन्त्यपरिमितमनुशंसन्ति ' परिमितं भूतमपरिमितं भव्यमपरिमितान्येवावरुन्ध्यादित्यतिशंसति[9]

---

1) स्तुवन्ते A und F; 2) हिरण्य A sec. m. und D; 3) °मासीत तदेवैषां D; 4) निरेवैनामेभ्य: A pr. m; 5) भावत E; 6) ग्रंसति D; 7) तेना D; 8) °स्तोत्रां F; 9) °तिग्रंसन्ति A und F.

स्तोममंति वै प्रजास्यात्मानमति पशवस्तद्यदेवास्यात्मानं तदेवास्यैतेनाप्याययन्त्यथो[1] द्वयं वा इदं सर्वं स्नेहश्चैव तेजश्चाथ[2] तदहोरात्राभ्यामाप्तं[3] ' स्नेहतेजसोराप्त्यै ' गायत्रान्स्तोत्रियानुरूपाञ्छंसन्ति[4] 'तेजो वै गायत्री' तमः पाप्मा रात्रिस्तेन तेजसा तमः पाप्मानं तरन्ति 'पुनरादायं[4] शंसन्त्येवं[6] हि सामगा स्तुवते 'यथा स्तुतमनुशस्तं[7] भवति' न हि तत्स्तुतं[8] यन्नानुशस्तं ' तदाहुरथ कस्मादुत्तमात्प्रतीहारादाहूय साम्ना शस्त्रमुपसंतन्वन्तीति[9] ' ॥ ३ ॥

पुरुषो वै यज्ञस्तस्य शिर एव हविर्धानं[10] ' मुखमाहवनीय ' उदरं सदो ' ऽन्नमुक्थानि[11] ' बाहू[12] मार्जालीयश्चाग्नीध्रीयश्च[13] 'या इमा देवतास्ते ऽन्तःसदसं[14] धिष्ण्याः ' प्रतिष्ठे गार्हपत्यव्रतश्रपणावित्यथापरं[15] ' तस्य मन एव ब्रह्मा ' प्राण उद्गातापानः प्रस्तोता ' व्यानः प्रतिहर्ता ' वाग्घोता ' चक्षुरध्वर्युः ' प्रजातिः[16] सदस्यो ' ऽङ्गानि होत्राशंसिन ' आत्मा यजमानस्तद्यदध्वर्युः स्तोत्रमुपाकरोति

1) ? ? °ययत्यथो ?; 2) So corr.; die hss. तत्रेजश्च°; 3) So corr.; die hss. °ऽभ्यामाप्त्यं; 4) Die hss. यायत्रीं; A, D und F स्तोत्रियानुरूपं; °सते D und E; 5) पुनरादाय A pr. m. und F; 6) शंसति D; 7) शांस्तं E; शंस्तं F; 8) त स्तुतं D; तत स्तुतं E; 9) °तन्वतीति D; °तन्वीति F; 10) हविर्धान F; 11) So corr. nach K. Br. XVII 7, Z. 6; die hss. ऽन्तरुक्थानि; 12) बहू D; 13) मार्जालीयश्चा A, E und F; 14) ऽन्तस-दसं D; 15) °व्रतलपणा° A, E und F; 16) So corr. nach K. Br. XVII 7, Z. 9; die hss. प्रजापतिः.

सोमः पवत इति चक्षुरेव तत्प्राणैः संदधात्यथ[1] यत्प्र-
स्तोता ब्रह्माणमामन्त्रयते ब्रह्मन्स्तोष्यामः प्रशास्तरिति
मनो ऽग्रणीर्भवत्येतेषां[2] प्राणानां मनसा हि[3] प्रसूता[4]
स्तोमेन स्तुयामेति' प्राणानेव तन्मनसा संदधात्यथ[5]
यद्ब्रह्मा स्तुतेत्युच्चैरनुजानाति मनो वै ब्रह्मा' मन एव
तत्प्राणैः संदधात्यथ यत्प्रस्तोता प्रस्तौत्यपानमेव तत्प्राणैः
संदधात्यथ यत्प्रतिहर्ता प्रतिहरति व्यानमेव तदपानैः
संदधात्यथ यदुद्गातोद्गायति समानमेव तत्प्राणैः संदधात्यथ
यद्धोता साम्ना शस्त्रमुपसंतनोति वाग्वै होता वाचमेव
तत्प्राणैः संदधात्यथ[5] यत्सदस्यो ब्रह्माणमुपासीदति प्र-
जातिर्वै[6] सदस्यः प्रजातिमेवाप्नोत्यथ[7] यद्धोत्राशंसिनः
सामसंततिं[8] कुर्वन्त्यङ्गानि वै होत्राशंसिनो ऽङ्गान्येवास्य
तत्प्राणैः संदधात्यथ यद्यजमानः स्तोत्रमुपासीदत्यात्मा
वै यजमान आत्मानमेवास्य तत्कल्पयति' तस्मान्नैनं
बहिर्वेद्यभ्याश्रावयेन्नाभ्युदियान्नाभ्यस्तमियान्नाधिष्ण्ये[9] प्र-
तपेन्नेत्प्राणेभ्य आत्मानमन्तरगादिति[10]' ॥ ४ ॥

---

1) °संदध° D; 2) गुणी° A sec. m.; गृणी° A pr. m.; 3) ?? om.?; 4) प्रसृता D; 5) संदध्यात्यथ D; 6) So corr.; die hss. प्रजापतिर्वै; 7) So corr.; die hss. प्रजापतिमेवा°; 8) So corr.; die hss. सामं संतति; A pr. m. सामं संतंनी; 9) So corr.; A pr. m. und D बर्हिवे°; A sec. m., E und F बहिर्वे°; 10) °मन्तरागादिति A pr. m.

प्रथमेषु पर्यायेषु स्तुवते प्रथमेषु पदेषु निनर्दयन्ति[1] प्रथमरात्रादेव तदसुरान्निर्घ्नन्ति[2] ' मध्यमेषु पर्यायेषु स्तुवते मध्यमेषु पदेषु[3] निनर्दयन्ति ' मध्यमरात्रादेव तदसुरान्निर्घ्नन्त्युत्तमेषु[4] पर्यायेषु स्तुवत उत्तमेषु पदेषु निनर्दयन्त्युत्तमरात्रादेव तदसुरान्निर्घ्नन्ति[4] ' तद्यथाभ्यागारं[5] पुनः पुनः[3] पाप्मानं निर्हरन्त्येवमेवैतत्स्तोत्रियानुरूपाभ्यामहोरात्राभ्यामेव तदसुरान्निर्घ्नन्ति[6] ' गायत्रीं[7] शंसन्ति[8] ' तेजो वै[9] ब्रह्मवर्चसं गायत्री ' तेज एवास्मै तद्ब्रह्मवर्चसं यजमाने दधति ' गायत्रीः[10] शस्त्वा जगतीः[11] शंसन्ति[12] ' ब्रह्म ह वै जगती ' ब्रह्मणैवास्मै तद्ब्रह्मवर्चसं यजमाने दधति ' व्याह्वयन्ते गायत्रीश्च जगतीश्चान्तरेण ' छन्दांस्येव तन्नानावीर्याणि कुर्वन्ति ' जगतीः शस्त्वा त्रिष्टुभः शंसन्ति ' पशवो वै जगती ' पशूनेव तत्त्रिष्टुब्भिः[13] परिदधति ' बलं वै वीर्यं त्रिष्टुब्बलमेव[14] तद्वीर्ये ऽन्ततः प्रतिष्ठापयत्यंधस्वत्यो मद्वत्यः[15] सुतवत्यः पीतवत्यस्त्रिष्टुभो याज्याः समृद्धाः सु-

---

1) °यति D; 2) Die hss. °न्निरघन्ति; 3) Fehlt in D; 4) So corr.; die hss. °न्निरघ्न°; 5) So corr.; die hss. °भ्याघारात्; 6) Die hss. °न्निरघ्नन्ति; 7) गायत्रीः??; 8) प्रांसति D; 9) Fehlt in A sec. m. und E; 10) गयत्रीं A pr. m. und F; 11) जगतीं A, D und F; 12) प्रांसति D; 13) So corr.; die hss. तत्त्रिष्टुभ; 14) Korrupt, man erwartet वल एव E und F; 15) मद्वन्त्यः E.

लक्षणा[1] ' एतद्धि रात्रीरूपं ' जागृयाद्रात्रिं[2] ' यावद्ध वै न वा स्तुवते न वा शस्यते[3] तावदीश्वरा[4] असुरा रक्षांसि च यज्ञमन्ववनयन्ति ' तस्मादाहवनीयं समिद्धमाग्नीध्रीयं[5] गार्हपत्यं धिष्ण्यान्समुज्ज्वलयतेति[6] भाषेरन्ज्वलयेरन्प्रंकाशमिवैव[7] तत्स्यादारेभन्त:[7] शयीरंस्तान्ह[7] त:[8] श्रेष्ठो[8] वा[8] इति[8] पाप्मा[8] नाभिवृक्णोति[8] ' ते तमः पाप्मानमपाघ्नते ' ते तमः पाप्मानमपाघ्नते ' ॥ ५ ॥

विश्वरूपं वै त्वाष्ट्रमिन्द्रो[9] ऽहन्स[10] त्वष्टा हतपुत्रो ऽभिचरणीयमपेन्द्रं सोममाहरत्तस्येन्द्रो यज्ञवेशसं[11] कृत्वा[11] प्रासह्य सोममपिबत्स विघङ्व्यार्छत्तस्मात्सोमो[12] नानुपहूतेन[13] [न[13]] पातव्यः ' सोमपीथो ऽस्य व्यर्धुको[14] भवति ' तस्य मुखात्प्राणेभ्यः श्रीर्यशांस्यूर्ध्वान्युदक्रामंस्तानि[15] पशून्प्राविशंस्तस्मात्पशवो यशो ' यशो ह भवति य एवं वेद ' ततो ऽस्मा एतदश्विनौ च सरस्वती च यज्ञं

---

1) सुलक्षा A sec. m.; D, E und F; 2) जाग्रियाद्रा° E; 3) शस्यन्ते F; 4) A und F fügen वा ein; 5) समृद्धमाग्नीध्रियं D; 6) So corr. die hss. धिष्ण्यं समु°; °समुद्धलयतेति D; °समुज्ज्वलयेति E; 7) So corr.; die hss. भाषयेर°; die hss. शमिव वै तस्यादरेभिन्नं सुवोरंस्तान्ह; 8) Korrupt; 9) त्वष्ट्र° A und F; 10) die hss. ऽहं स; 11) So corr.; die जज्ञिरे स संस्कृत्वा; 12) So corr.; die hss. विष्टद्व्यर्इत्त°; 13) Doppelte negation!; नानुपहूयतेन A; 14) द्धधि° A pr. m.; द्धृधि° A sec. m.; वृधि° D, E und F; 15) °न्यदक्रामन्तानि A und D.

समभरन्त्सौत्रामणीं भेषज्याय ' तयेन्द्रमभ्यषिञ्चंस्ततो[1] वै स[2] देवानां श्रेष्ठो[3] ऽभवच्छ्रेष्ठः स्वानां चान्येषां च भवति य एवं वेद यश्चैवं विद्वांत्सौत्रामण्याभिषिच्यते ' ॥ ६ ॥

अथ साम गायति ब्रह्मा ' क्षत्रं वै साम ' क्षत्रेणैवैनं तदभिषिञ्चत्यथो साम्राज्यं[4] वै साम ' साम्राज्येनैवैनं तत्साम्राज्यं गमयत्यथो सर्वेषां वा एष वेदानां[5] रसो यत्साम ' सर्वेषामेव तद्वेदानां रसेनाभिषिञ्चति ' बृहत्यां[6] गायति[7] ' बृहत्यां वा असावादित्यः श्रियां प्रतिष्ठायां प्रतिष्ठितस्तपत्यैन्द्र्यां बृहत्यां गायत्यैन्द्रो वा एष यज्ञक्रतुर्यत्सौत्रामणिरिन्द्रायतन[8] एष एतर्हि यो यजते ' स्व एवैनं तदायतने प्रीणात्यथ कस्मात्संशानानि[9] नामैतैर्वै सामभिर्देवा इन्द्रमिन्द्रियेण वीर्येण[3] समश्यंस्तथैवैतद्यजमाना[10] एतैरेव सामभिरिन्द्रियेणैव वीर्येण संश्यन्ति ' संश्रवसे[11] विश्रवसे सत्यश्रवसे श्रवस इति सामानि भवन्त्येष्वेवैनं लोकेषु प्रतिष्ठापयति ' चतुर्निधनं भवति ' चतस्रो वै दिशो ' दिक्षु तत्प्रतितिष्ठन्ते ' ऽथो चतुष्पादः पशवः ' पशूनामाप्त्यै ' तदाहुर्यदेतत्साम गीयते ऽथ क्वैतस्य

---

1) तयन्द्र° F; 2) Fehlt in D und F; 3) Fehlt in D; 4) सामराज्यं E; 5) देवानां D; 6) बृहत्या E; 7) गयन्ति A pr. m.; 8) So corr.; die hss. °रैन्द्रायतन; 9) °त्संश्यानानि A, E und F; 10) °जमान E; 11) संश्रावासे A pr. m.

साम्न[1] उक्थं[1] का प्रतिष्ठा ' त्रया[2] देवा एकादशेत्या-हुरेतद्वा एतस्य साम्न[1] उक्थमेषा[1] प्रतिष्ठा ' त्रयस्त्रिंशं[3] ग्रहं गृह्णाति ' साम्नः प्रतिष्ठायै प्रतिष्ठायै[4] ' ॥ ७ ॥

प्रजापतिरकामयत वाजमाप्नुयां[5] स्वर्गं लोकमिति[6] ' स एतं वाजपेयमपश्यद्वाजपेयो वा[7] एष य एष तपति ' वाजमेतेन यजमानः स्वर्गं[8] लोकमाप्नोति ' शुक्रवत्यो[9] ज्योतिष्मत्यः प्रातःसवने भवन्ति ' तेजो[10] ब्रह्मवर्चसं ताभिराप्नोति ' वाजवत्यो माध्यंदिने सवने[4] ' स्वर्गस्य लोकस्य समष्ट्या ' अन्नवत्यो गणवत्यः पशुमत्यस्तृतीयसवने भवन्ति ' भूमानं ताभिराप्नोति ' सर्वः सप्तदशो भवति[11] ' प्रजापतिर्वै सप्तदशः ' प्रजापतिमेवाप्नोति[12] ' हिरण्यस्रज ऋत्विजो भवन्ति ' महस[13] एव तद्रूपं क्रियत ' एष मे ऽमुष्मिंल्लोके प्रकाशो[14] ऽसदिति ' ज्योतिर्वै हिरण्यं[15] ' ज्योतिष्येवैनमन्तर्दधत्याजिं[16] धावन्ति ' यजमानमुज्जापयन्ति[17] ' नाकं[18] रोहति समहसे[19] रोहति[20] विश्वमहसे

1) So corr.; die hss. साम्नमुक्थं; 2) त्रयो A pr. m.; 3) त्रयस्त्रिंश E; 4) Fehlt in D; 5) So corr.; die hss. °पुयात्; 6) So corr.; die hss. लोकमेति; 7) Fehlt in F; 8) स्वर्गे E; 9) °वत्यौ E; 10) Von तेजो bis भूमा° fehlt in F; 11) So corr.; die hss. भवन्ति; 12) प्राजाप° D; 13) महत्स A sec. m.; महत्य F; 14) प्रशाको F; 15) हिरण्य D; 16) °दधात्याजिं F; 17) °पयति D; 18) So corr. नाके A, E und F; नाक D; 19) Fehlt in E und F; P. Br. सरजसे; 20) Fehlt in E und F.

रोहति सर्वमह्नसे रोहति ' मनुष्यलोकादेवैनमन्तर्दधाति ' देवस्य सवितुः सवे[1] स्वर्गं लोकं वर्षिष्ठं नाकं रोहेयमिति[2] ब्रह्मा रथचक्रं सर्पति[3] ' सवितृप्रसूत एवैनं तत्सर्पत्यथो[4] प्रजापतिर्वै ब्रह्मा ' प्रजापतिमेवैनं वज्रादधिप्रसुवति[5] ' नाकस्योज्जित्यै ' वाजिनां संतत्यै ' वाजिसामाभिगायति ' वाजिमान्भवति ' वाजो वै स्वर्गो[6] लोकः ' स्वर्गमेव तल्लोकं रोहति[7] ' विष्णोः शिपिविष्टवतीषु बृहदुत्तमं भवति ' स्वर्गमेव तल्लोकं रूढ्वा ब्रध्नस्य विष्टपमतिक्रामत्यतिक्रामति ' ॥ ८ ॥

अथातो ज्योतिर्यामा ' प्रजापतिर्वै यत्प्रजा असृजत ता वै तान्ता[8] असृजत ' ताः सृष्टाः पराच्य एवासन्नोपावर्तन्त[9] ' ता एकेन स्तोमेनोपागृह्णात्ता अत्यरिच्यन्त[10] ' ता द्वाभ्यां ' ताः सर्वैस्तांस्मात्सर्वस्तोमस्ता एकेन पृष्ठेनोपागृह्णात्ता अत्यरिच्यन्त ' ता द्वाभ्यां ' ताः सर्वैस्तांस्मात्सर्वपृष्ठस्ता[11] अतिरिक्तोक्थे वारवन्तीयेनावारयंस्तांस्मादेषो[12]

1) So corr.; सवं A, D und F; सर्वं E; 2) रुहेयमिति A pr. m.; रोहमिति F; 3) समर्पयति A sec. m. und E; 4) तत्समर्पयत्यथो A, E und F; 5) °सूवति A pr. m.; E und F; °श्रुवति D; 6) D fügt वै ein; 7) Von रोहति bis रूढ्वा fehlt in F; 8) ताता F; 9) °न्नोव्यावर्तन्त D; 10) अतिरिच्यन्त D; 11) So corr.; die hss. °र्वस्पृष्ठस्ता; 12) ? wschl. °वारयन्तस्मादेषो ·

ऽतिरिक्तोक्थवान्भवति[1] ' तस्माद्वारवन्तीयं ' ता यद्यात्वा-
यच्छृदतो[2] वा अप्तोर्यामांथो[3] प्रजा वा[4] अप्तुरित्याहुः[4] '
प्रजानां यमन[5] इति[6] हैवैतदुक्तं[7] ता[8] वर्द्धिः[8] प्रजा-
अयेरंस्तांर्द्धि[8] हैतेन यजते ' स एषो ऽष्टापृष्ठो भवति '
तद्यथान्यस्मिन्यज्ञे विश्वजितः[9] पृष्ठमनु[10] संचरं भवति
कथमेतदेवमत्रेति[11] ' पितेष[8] यज्ञानां ' तद्यथा श्रेष्ठिनि[12]
संवशेयुरपि विद्विषाणा एवमेवैतच्छ्रेष्ठिनो वशेयान्नमन्न-
स्यानुचर्याय[13] क्रमन्ते ' ॥ १ ॥

तद्यथैवादो ऽह्न उक्थानामाग्नेयं[14] प्रथमं भवत्येवमे-
वैतदत्राप्याग्नेयं प्रथमं भवत्यैन्द्रे वाव तत्रोत्तरे[15] ' ऐन्द्रे
वा एते ' ऐन्द्राविष्णावमच्छावाकस्योक्थं[16] भवति ' चतु-
रात्रावान्यतिरिक्तोक्थानि[17] भवन्ति ' पशवो वा उक्थानि '
चतुष्टया वै पशवो ' ऽथो चतुष्पादः पशवः ' पशूनामाप्त्यै '
त एते स्तोत्रियानुरूपास्तृचा अर्धर्चशस्याः[18] ' प्रतिष्ठा वा
अर्धर्चः[19] ' प्रतिष्ठित्या एवाथैतेषामेवाश्विनानां सूक्तानां

1) °वन्ति E; 2) So corr.; die hss. यद्याप्ना°; 3) So corr.; die hss. °र्यामा अथो; 4) So corr.; त्वापुरिति A; त्वापुरिति E; त्वापुरिति F; 5) यत्तामन F; 6) इत्ती A und E; 7) °तदुक्त A und F; 8) ? ?; 9) द्विश्वुजि E; 10) पृष्ठ्यमनु E; 11) °वमित्रेति D; 12) श्रेष्ठनि D; 13) ? ? संश्रेयान्° D; 14) उक्थानाग्नेयं D; 15) तत्रोत्तर A und F; 16) °स्योक्तं D; 17) °क्तोक्तानि D; 18) °र्चशस्य E; 19) So corr.; die hss. वार्धर्चः.

द्वे द्वे समाहावमेकैकमहरहः शंसत्यश्विनौ[1] वै देवानां भिषजौ ' तस्मादाश्विनानि सूक्तानि शंसति[2] ' तदश्विभ्यां प्रददुरिदं भिषज्यतमिति ' क्षैत्रपत्याः[3] परिधानीया भवन्ति' यत्र ह तस्तत्प्रजा[4] अशनायन्तीः पिपासन्तीः[5] संरुद्धा स्थिता आसंस्ता दीना एताभिर्यथाक्षेत्रं[6] पाययां चकार तर्पयां चकारांथो इयं वै क्षेत्रं पृथिव्यस्यामदीनायामन्ततः प्रतिष्ठास्यामह इति ' त्रिष्टुभो याज्या भवन्ति[7] ' यत्र ह तस्तत्प्रजा[4] अशनायन्तीः पिपासन्तीः[8] संरुद्धा स्थिता बभूवुस्ता हैवैना एताभिर्यथौकसं व्यवसाययां[9] चकार ' तस्मादेता याज्या भवन्ति तस्मादेता[10] याज्या[10] भवन्ति[10] '

॥ १० ॥

अथतो ऽनैकाहिकं ' अस्तोत्रियमन्वस्तोत्रियस्यानुरूपं कुर्वन्ति प्रातःसवने ' ऽहीनमेव तत्संतन्वन्त्यंहीनस्य संतत्यै ' तद्यथा ह वा एकाहः सुत[11] एवमहीनः सुतस्तंद्यथैकाहस्य सुतस्य सवनानि संतिष्ठमानानि यन्त्येवमहीनस्य[12] सुतस्याहानि संतिष्ठमानानि यन्ति ' तद्यच्छ्वस्तो-

---

1) प्रांसत्या° F; 2) प्रांसन्ति A und F; 3) So corr.; die hss. क्षेत्रवत्य:; 4) ? ?; 5) पिब्रासन्ती A, D und F; पिवासन्ती: E; 6) °क्षत्रं D; 7) भवति F; 8) So corr.; die hss. पिब्रा°; 9) व्यवसायां D; 10) Fehlt in A sec. m., D und F; 11) स्तुत A sec. m., D und F; 12) यत्येव° D.

त्रियमन्वस्तोत्रियस्यानुरूपं कुर्वन्ति प्रातःसवने ऽहरेवं तदह्नो ऽनुरूपं कुर्वन्त्यपरेणैव[1] तदह्नापरमहरभ्यारभन्ते[2] तत्तथा न माध्यंदिने सवने श्रीर्वै पृष्ठानि तानि तस्मिन्नेवावस्थितानि भवन्त्येतेनैव विधिना तृतीयसवने[3] न श्वस्तोत्रियमन्वस्तोत्रियस्यानुरूपं[4] कुर्वन्ति ॥ ११ ॥

अथात आरम्भणीया एव ऋजुनीती[5] नो वरुण इति मैत्रावरुणस्य मित्रो नयतु विद्वानिति प्रणेता वा एष होत्रकाणां यन्मैत्रावरुणस्तस्मादेषा प्रणेत्रिमती[6] भवतीन्द्रं[7] वो विश्वतस्परीति ब्राह्मणाच्छंसिनो हवामहे जनेभ्य इतीन्द्रमेवैतयाहरहर्निर्ह्वयन्ते न हैवैषां[8] विह्वे ऽन्य इन्द्रं[9] वृङ्क्ते यत्रैवं विद्वान्ब्राह्मणाच्छंस्येतामहरहः शंसति यत्सोम आ सुते[10] नर[11] इत्यच्छावाकस्यैन्द्राग्नी अजोहवुरितीन्द्राग्नी एवैतयाहरहर्निर्ह्वयन्ते[12] न हैवैषां[13] विह्वे ऽन्य[14] इन्द्राग्नी[14] वृङ्क्ते यत्रैवंविद्वानच्छावाक[15] एतामहरहः[16] शंसति ता वा एताः स्वर्गस्य

---

1) कुर्वन्त्यवरेणोव D; 2) °रभते A sec. m.; 3) °सद्ने E; 4) श्वस्तोत्रियमश्वस्तोत्रि° F; 5) ऋतुनीति D; ऋतुनीती E; 6) प्रणोत्रीमती D; 7) भवन्तीन्द्रं D und E; 8) ह वैषां A pr. m.; 9) इन्द्राग्नीं E; 10) सते A sec. m., und D; 11) Fehlt in F; 12) °र्निह्वयन्ति D; 13) हैषां D; 14) ऽन्येन्द्राग्नी D; ऽन्य इन्द्राग्नीं E; 15) Die hss. °च्छावाकस्यैता°; 16) अहः nur einmal in E.

लोकस्य नावः संतारण्यः 'स्वर्गमेवैताभिर्लोकमनुसंतरन्ति[1]' ॥ १२ ॥

अथातः परिधानीया एव 'ते स्याम देव वरुणेति मैत्रावरुणस्यैषं स्वश्च[2] धीमहीत्ययं[3] वै लोक इषमित्यसौ लोकः स्वरित्युभावेवैनौ तौ लोकावारभते 'व्यन्तरिक्षमतिरदिति ब्राह्मणाच्छंसिनो 'विवत्तृचं[4] 'स्वर्गमेवैताभिर्लोकं विवृणोति 'मदे सोमस्य रोचनेन्द्रो यदभिनद्वलमिति[5] 'सिषासवो[6] ह वा एते यद्दीक्षितास्तस्मादेषा वलवती भवत्युद्गा आजदङ्गिरोभ्य आविष्कृवन्गुहा सतीः । अर्वाञ्चं नुनुदे वलमिति 'सनिमेतेभ्य एतयावरुन्द्ध 'इन्द्रेण रोचना दिवो दृढानि दृंहितानि च । स्थिराणि न पराणुद इति 'स्वर्गमेवैतयाहरहर्लोकमवरुन्द्ध 'आहं सरस्वतीवतोरित्यच्छावाकस्यैन्द्राग्न्योरवो वृण इत्येतद्ध वा इन्द्राग्न्योः प्रियं धामो यद्वागिति 'प्रियेणैवैनौ[7] तद्धाम्ना समर्धयति 'प्रियेणैव धाम्ना समृध्यते य एवं वेद' ॥ १३ ॥

उभय्यो[8] होत्रकाणां परिधानीया भवन्त्यहीनपरि-

---

1) °संचरन्ति A, D und F; °संचरति E; 2) अस्व A, D und E; 3) °हित्ययं F; 4) विवृचं E; 5) °दूबलमिति A pr. m. und F; 6) सिषिसवो A pr. m.; 7) प्रियेणौनौ D; 8) उभयो A, D und E.

धानीयाश्चैकाह्निनस्य[1] ' तत ऐकाह्निकीभिरेव मैत्रावरुणः परिदधाति ' तेनास्माल्लोकान्न प्रच्यवत ' आह्निनीकीभिरच्छावाकः ' स्वर्गस्य लोकस्याप्त्या ' उभयीभिर्ब्राह्मणाच्छंस्यैवमसावुभौ[2] व्यन्वारभमाण एतीमं च[3] लोकममुं चाथो ऽहीनं चैकाहं चाथो[4] संवत्सरं चाग्निष्टोमं चाथो मैत्रावरुणं चाच्छावाकं चैवमसावुभौ व्यन्वारभमाण एत्यथ तत ऐकाह्निकीभिरेव तृतीयसवने होत्रकाः परिदधति[5] ' तेनास्माल्लोकान्न प्रच्यवत ' आह्निनीकीभिरच्छावाकः ' स्वर्गस्य लोकस्य समष्ट्यै ' कामं तद्धोता शंसेद्यद्धोत्रकाः[6] पूर्वेद्युः शंसेयुर्यद्वि होता तद्धोत्रकाः[6] ' प्राणो वै होताङ्गानि होत्रकाः ' समानो वा अयं प्राणो ऽङ्गान्यनुसंचरति ' तस्मात्तत्कामं होता शंसेद्यद्धोत्रकाः पूर्वेद्युः शंसेयुर्यद्वि होता तद्धोत्रका ' आत्मा वै होताङ्गानि होत्रकाः ' समाना वा इमे ऽङ्गानामन्तास्तस्मात्तत्कामं[7] होता शंसेद्यद्धोत्रकाः पुर्वेद्युः शंसेयुर्यद्वि होता तद्धोत्रकाः ' सूक्तान्तैर्होता परिदधात्यथ समान्य[8] एव होत्रकाणां परिधानीया भवन्ति ' ॥ १४ ॥

---

1) भवत्य° D und E; 2) उभायौ° E; 3) व F; 4) वाथो D; 5) So corr.; die hss. °दधाति; 6) °त्रक: D; 7) ऽङ्गानामन्त्वास्त° D; 8) सामान्य A pr. m.; D und E.

यः श्वस्तोत्रियस्तमद्यस्तोत्रियस्यानुरूपं कुर्वन्ति प्रातः-सवने ' ऽहीनमेव तत्संतन्वन्त्यहीनस्य[1] संतत्यै ' त[2] एते होत्रकाः प्रातःसवने षडहस्तोत्रियं शस्त्वा[3] माध्यंदिने ऽहीनसूक्तानि शंसन्त्यां[4] सत्यो यातु मघवां ऋजीषीति ' सत्यवन्मैत्रावरुणो[5] ' ऽस्मा इदु प्र तवसे तुरायेति ब्राह्मणाच्छंसी ' शासद्वह्निर्दुहितुर्नप्त्यं गादित्याच्छावाकस्तदाहुः कस्मादच्छावाको वह्निवदेतत्सूक्तमुभयत्र[6] शंसति स[7] पराञ्चु चैवाहःस्वर्वाञ्चु[8] चेति ' वीर्यवान्वा एष बह्वृचो यदच्छावाको ' वहति ह वै वह्निर्धुरो यासु युज्यते ' तस्मादच्छावाको वह्निवदेतत्सूक्तमुभयत्र[9] शंसति स[7] पराञ्चु चैवाहःस्वर्वाञ्चु[10] चेति ' तानि पञ्चस्वहःसु शस्यन्ते चतुर्विंशे ऽभिजिति विषुवति विश्वजिति महाव्रते ' तान्येतान्यहीनसूक्तानीत्याचक्षते ' न ह्येषु किं चन हीयते ' पराञ्चि ह वा एतान्यहान्यनभ्यावर्तीनि[11] भवन्ति ' तस्मादेतान्येतेष्वहःसु शस्यन्ते ' यदेतानि शंसन्ति[12] तत्स्वर्गस्य लोकस्य रूपं ' यद्वेवैतानि शंसन्तीन्द्रमेवैतैर्निर्ह्वयन्ते[13]

---

1) तत्संतन्वत्य° D; 2) Fehlt in D; 3) शंसा F; 4) शंसत्या° D und E; 5) सत्यवान्मै° A pr. m.; 6) °मुतयत्र D; °मुभयति F; 7) ? ?; 8) So corr.; चैवाहसर्वाञ्चु A, E und F; चैवाद: सर्वाञ्चु D; 9) वह्निवदेत्तत्सू° A; 10) So corr.; die hss. चैवाहसर्वाञ्चु; 11) So corr.; die hss. एतान्यहान्यभ्या°; 12) शंसति D; 13) शंसती° A.

यथर्षभं वाशितायै' ते वै देवाश्चर्षयश्चाब्रुवंत्समानेन यज्ञं संतन्वामहा इति' तदेतद्यज्ञस्य समानमपश्यंत्समानान्प्रगाथांत्समानीः प्रतिपदः समानानि सूक्तान्योकःसारी वा इन्द्रो' यत्र वा इन्द्रः पूर्वं[1] गच्छति[2] गच्छत्येव तत्रापरं' यज्ञस्यैव सेन्द्रतायै' ॥ १५ ॥

॥ इत्यथर्ववेदे गोपथब्राह्मणोत्तरभागे पञ्चमः प्रपाठकः ॥

---

ओं तान्वा एतान्संपातान्विश्वामित्रः प्रथममपश्यद्देवा वामिन्द्र वज्रिन्नत्र यन्न इन्द्रो जुजुषे[3] यच्च वष्टि कथा महामवृधत्कस्य[4] होतुरिति' तान्विश्वामित्रेण दृष्टान्वामदेवो[5] ऽसृजत' स हेन्नां चक्रे विश्वामित्रो यान्वा[6] अहं[6] संपातानदर्शं तान्वामदेवो[7] ऽसृजत' कानि न्वहं[8] हि[9] सूक्तानि संपातांस्तत्प्रतिमान्त्सृजेयमिति[10]' स एतानि सूक्तानि संपातांस्तत्प्रतिमानसृजत[11]' सद्यो ह जातो वृषभः कनीन उद्‌ ब्रह्माण्यैरत[12] अवस्याभि तष्टेव दीधया मनी-

---

1) पूर्वे F; 2) गच्छति fehlt in F; 3) जुषे D; 4) माहा° A pr. m.; 5) दृष्ट्वा° A sec. m. und E; 6) यान्वाहं A und F; यात्रान्वाहं D; 7) °दर्शेस्तान्वामदेवो E; 8) So corr.; die hss. त्वं; 9) Korrupt!; 10) °त्प्रतिमानसृजेतेयमिति E; °त्प्रतिमानसृजयमिति D; 11) °सृजते A pr. m.; 12) ब्रह्मपर्यै° D.

षामिति विश्वमित्र ' इन्द्रः पूर्भिदातिरद्दासमर्कैर्य[1] एक इद्धव्यश्चर्षणीनां[2] यस्तिग्मशृङ्गो वृषभो न भीम इति वसिष्ठ ' इमामू षु प्रभृतिं सातये धा इच्छन्ति[3] त्वा सोम्यासः सखायः[4] शासद्वह्निर्दुहितुर्नप्त्यं[5] गादिति भरद्वाज ' एतैर्वै संपातैरेत[6] ऋषय इमाँल्लोकान्त्समपतंस्तंयत्समपतंस्तस्मात्संपातास्तत्संपातानां संपातत्वं ' ततो वा एतांस्त्रीन्संपातान्मैत्रावरुणो विपर्यासमेकैकमहरहः[7] शंसत्येवा त्वामिन्द्र वज्रिन्नत्रेति प्रथमे ऽहनि ' यन्न इन्द्रो जुजुषे यच्च वष्टीति[8] द्वितीये ' कथा महामवृधत्कस्य होतुरिति तृतीये ' त्रीनेव संपातान्ब्राह्मणाच्छंसी विपर्यासमेकैकमहरहः शंसतीन्द्रः पूर्भिदातिरद्दासमर्कैरिति प्रथमे ऽहनि ' य एक इद्धव्यश्चर्षणीनामिति द्वितीये[9] ' यस्तिग्मशृङ्गो वृषभो न भीम इति तृतीये ' त्रीनेव संपातानच्छावाको विपर्यासमेकैकमहरहः शंसतीमामू षु प्रभृतिं सातये धा इति प्रथमे ऽहनीच्छन्ति त्वा सोम्यासः सखाय इति द्वितीये ' शासद्वह्निर्दुहितुर्नप्त्यं गादिति तृतीये ' तानि वा एतानि नव त्रीणि चाहरहःशंस्यानि[10] '

1) पूर्भिदति° A pr. m.; 2) ष्पुर्तपीनां E; 3) इच्छन्ते A; 4) खाय: E; 5) ग्रासद्व° E; 6) संपतेरेत D; 7) °कमह: A sec. m.; 8) वष्टीति A pr. m.; 9) द्वे F; 10) वाहरह:° E.

तानि द्वादश भवन्ति' द्वादश ह वै मासाः संवत्सरः' संवत्सरः[1] प्रजापतिः' प्रजापतिर्यज्ञस्तंत्संवत्सरं[2] प्रजापतिं यज्ञमाप्नोति[3]' तस्मिंत्संवत्सरे प्रजापतौ[4] यज्ञे ऽहरहः प्रतितिष्ठन्तो यन्ति' प्रतितिष्ठत[5]' इदं सर्वमनु प्रतितिष्ठति[6]' प्रतितिष्ठति[6] प्रजया पशुभिर्य एवं वेद' तान्यन्तरेणावापमावपेरन्नंन्यूङ्खा[7] विराजश्चतुर्थे ऽहनि वैमदीश्च[8] पङ्क्तीः पञ्चमे पारुच्छेपीः[9] षष्ठे' ऽथ यान्यन्यानि महास्तोत्राण्यष्टर्चान्यावपेरन् ॥ १ ॥

को अद्य[10] नर्यो देवकाम इति मैत्रावरुणो[11]' वने न वा यो न्यधायि चाकन्निति ब्राह्मणाच्छंस्यां यात्यर्वाङुपवन्धुरेष्ठा[12] इत्यच्छावाक' एतानि वा आवपनान्येतैरेवावपनैर्देवाश्चर्षयश्च[13] स्वर्गं लोकमायंस्तथैवैतद्यजमाना एतैरेवावपनैः[14] स्वर्गं लोकं यन्ति' सद्यो ह जातो वृषभः कनीन[15] इति मैत्रावरुणः पुरस्तात्संपातानामहरहः शंसति' तदेतत्सूक्तं स्वर्ग्यमेतेन[16] सूक्तेन

---

1) Fehlt in D; 2) °स्तं संवत्सरं D; 3) °प्नोति Sing. und Plur. durch einander gebraucht; Ait. Br. VI 19, 7; अपुवन्ति; 4) प्रजापतै A pr. m. und D; प्रजपति: E; 5) So corr.; die hss. प्रतिष्ठन्त; 6) °तष्ठन्ति D; 7) °न्यूङ्ख A; 8) So corr.; die hss. वैपदीश्च; 9) So corr.; die hss. पारुच्चेपीः; 10) अद्यं E; 11) °रुणौ F; 12) °पबन्धुरेष्ठा D und F; 13) आवयमानान्ये° E; °पनेदेवाश्च D; 14) °वपने: D; 15) वतीन E; 16) स्वर्गमे° A pr. m., D, E und F.

देवाश्चर्षयश्च स्वर्गं[1] लोकमायंस्तथैवैतद्यजमाना[2] एते-
नैव सूक्तेन स्वर्गं[1] लोकं यन्ति ' तदृषभवत्पशुमद्भवति '
पशूनामाप्त्यै ' तत्पञ्चर्चं भवत्यन्नं वै पङ्क्तिरन्नाद्यस्यावरु-
द्ध्या[3] ' अरिष्टैर्नः पथिभिः पारयन्तेति[4] स्वर्गताया[5] ए-
वैतदहरहः शंसत्युद्ब्रह्माण्यैरत[6] श्रवस्येति[7] ब्राह्म-
णाच्छंसी ' ब्रह्मण्वदेतत्सूक्तं समृद्धमेतेन सूक्तेन देवाश्चर्ष-
यश्च स्वर्गं[8] लोकमायंस्तथैवैतद्यजमाना एतेनैव सूक्तेन
स्वर्गं[9] लोकं यन्ति ' तद्वै षडृचं[10] ' षड्वा ऋतव ' ऋ-
तूनामाप्त्यै ' तदुपरिष्टात्संपातानामहरहः शंसत्यभि तष्टेव
दीधया मनीषामित्यच्छावाको[11]ऽहरहः शंसत्यभिवदति[12]
तत्यै[13] रूपमभि प्रियाणि मर्मृशत्पराणीति ' यान्येव प-
राण्यहानि तानि प्रियाणि ' तान्येव तदभिमर्मृशतो यन्त्य-
भ्यारभमाणाः ' परो वा अस्माल्लोकात्स्वर्गो[14] लोकः '
स्वर्गमेव तल्लोकमभिमृशन्ति ' कवीँरिच्छामि[15] संदृशे[16]
सुमेधा इति ' ये ह वा अनेन पूर्वे प्रेतास्ते[17] वै कव-

---

1) स्वर्गां A, E und F; 2) °जमानां A pr. m.; 3) °द्यस्यवरुन्ध्या D; 4) पारयन्त्विति A pr. m. D, E und F; 5) स्वर्गाताया A und F; 6) °ण्यैरेत A pr. m. und F; 7) श्रवत्येति D; 8) स्वर्गां A und F; 9) स्वर्गां A; 10) षडर्चं A und F; 11) °त्याच्छावाको A; 12) °भि-वदभि A, D, E; 13) तप्तै A und D; 14) So corr.; °ल्लोको स्वर्गो A pr. m.; °ल्लोकाः स्वर्गो A sec. m. D, E und F; 15) कावीं° E; 16) संदृशो A; 17) So corr.; die hss. प्रीतास्ते.

